विद्यमानानि भूयांसि पद्यानि तथैवाक्षरशोऽप्युद्धृतानि। तत्र तत्र विद्यमानस्वानुभवादिसिद्धार्थदर्शनपरैः प्रस्तावैः सह विराजमानं चिकित्सातिलकमिदं हि परिवर्तितं परिवर्धितं च द्वितीयमिवाष्टाङ्गहृदयप्रतिसंस्करणं विद्योतते।

अष्टाङ्गहृदयसंहितायां साम्प्रतमुपलभ्यमानायां सूत्रस्थाने शोधनादिगणाध्यायानन्तरं स्नेहस्वेदवर्णनपूर्वकं वमनविरेचनास्थापनानुवासनशिरोविरेचनाख्यपञ्चकर्माध्यायाः सप्रपञ्चं स्पष्टं च प्रतिपादिताः। परं तु पञ्चकर्मोपयोगिभेषजानां कल्पनं, तद्व्यापत्तिसिद्धिप्रकरणं च नानुपदं वर्णितम्; यद्विज्ञानमन्तरा नैव प्रयोक्तुं शक्यन्ते पञ्च कर्माणि। ते ह्यर्थाः परस्तात् धूमगण्डूषादिभिः सूत्रस्थानाध्यायैः शारीरनिदानचिकित्सास्थानैरन्तरिताः कल्पस्थाने

"कल्पो वमेर्विरेकस्य तत्सिद्धिर्बस्तिकल्पना।
सिद्धिर्बस्त्यापदां षष्ठो द्रव्यकल्पः॥"

इति क्रमेण प्रतिपाद्यन्ते। एवं चरकसंहितादिष्वपि प्राचीनग्रन्थेषु विप्रकीर्णा विच्छिन्नप्रतिपादिताश्चार्थाः। परं तु वमनादीनां विधाने तदनुपदमेव तत्तत्कल्पस्य तत्तद्व्यापत्सिद्धेश्च वर्णने तु सत्यमस्त्येव प्रतिपत्तिसौकर्यं विपर्यये च प्रतिपत्तिकृच्छ्रता। एवंविधं क्लेशं परिजिहीर्षता श्रीनिवासार्येण सूत्रस्थान एव वमनादिनिरूपणप्रस्तावे तत्र तत्रैव तत्तत्कल्पसिद्धी च प्रतिपाद्येते।

अष्टाङ्गहृदये हि सूत्र स्थाने प्रथमाध्याये द्रव्यस्वरूपं रसवीर्यविपाकादयः प्रकृतिसंभवोऽग्निभेदाश्चेत्येवमादयो बहवोऽर्था उपक्षिप्तमात्राः, परस्तादध्यायान्तरेषु विप्रकृष्टाः शारीरस्थाने च प्रतिपाद्यन्ते। चिकित्सातिलके तु तेषां यथायथं प्रकरणपरिच्छेदेन सुखबोधजनकं सन्निहितसङ्कलनं परिकल्प्य सुसङ्ग्रथनं विरचितम्। तदनन्तरमेव च स्वस्थवृत्ताध्यायेषु प्रवृत्यते। तथा हि दृश्यतेऽत्राध्यायनिर्माणक्रमः सूत्रस्थाने

"वैद्य, दोषादि, तद्भेद, वह्नि, प्रकृति, लक्षणम्।
सप्तधातु, रस, द्रव्य, रोगविज्ञानसंज्ञकाः॥
द्विविधोपक्रमश्चैव, दोषोपक्रमणीयकम्।
दिन, र्तुचर्या, रोगानुत्पादनीय, द्रवा, न्नकाः॥

अन्नसंरक्षणो, मात्रा, शुद्ध्यादि, स्नेहनामकाः ।
स्वेद, रेकौ, छर्दि, रेककल्प, तत्सिद्धि, वस्तिकाः ॥
तत्कल्प, सिद्धिक, द्रव्यकल्पना, नस्यकल्पना ।
धूम, गण्डूष, दृक्सेक, तृप्ति, यन्त्रक, शस्त्रकम् ॥
सिराविधिः, शल्यविधिः, शस्त्र, क्षाराग्निकर्मकौ ।
चत्वारिंशदिमेऽध्यायाः सूत्रस्थानमुदाहृतम् ॥ इति ।

एवं शारीरादिस्थानान्तरेष्वपि निपुणं परिवर्धनं अधिकरणं च परिपोषयति तन्त्रमुपमाम् । तथाऽतिस्थौल्यातिकार्श्यघ्ना भेषजयोगाः निद्राहरणानि, निद्राजननानि च सिद्धौषधानि, ऋतुचर्यापरिशिष्टप्रकरणे प्रपञ्चितमस्ताम्बूलवर्गः पुष्प, द्रव, श्रीगन्ध, चन्दनागरुकस्तूरीकुङ्कुमगन्धमार्जारवीर्यमृगमदगुरुप्रभृतीनां गुणाः चम्पककेतकीपुन्नागपाटलीबकुलकह्लारकुब्जकमाधवीजातीयूथिकामल्लिकाकुटजवासन्तीशतपत्रिकाकरवीरहस्तिकर्णीसौगन्धिककजपेन्दीवरपद्मकुटलीकुसुमानां उशीरदमनकमरुवकप्रभृतीनां च गुणाः पुष्पधारणकालनियमः कदलीफलदुर्गतिः मलबन्धजा विकाराः स्तन्यगुणविशेषाः नानाविधवस्त्राणां धारणे गुणविशेषाः छत्रपादुकादिगुणाः भोजनपात्रादिविशेषाणां गुणविशेषाः छायातपतमश्चन्द्रिकाग्निदीपदिग्वायुदेवपूजाऽऽदर्शादिगुणाः तथा भूमिभेदेन भूतगुणोल्बणत्वेन च जलस्य गुणभेदाः, कुसुमद्रुतिविधिः, नारीक्षीरगुणास्तत्प्रतिषेधः स्तन्यप्रयोगविषयविशेषाः, दधिप्रयोगाः मनोज्ञदधिकल्पना, शाकेष्ववयवग्रहविवेचनं, मात्राशितीयप्रसङ्गेन विषूचीचिकित्साप्रपञ्चः, वारिमज्जनमृतकल्पस्यौषधं; अग्निकर्मप्रसङ्गेन व्रणघ्नाः सिद्धयोगाः, अग्नितापप्रतीकारः, धान्यगृहोष्मव्यापत्प्रतिक्रिया, धूमोपहतलक्षणं, तत्प्रतिक्रिया चेत्येवमादीन्यन्यानि च सुबहूनि भिषजामौपयिकानि अर्थजातानि सुनिबद्धानि यान्यष्टाङ्गहृदयोक्तविषयैः सह तत्र तत्र यथाप्रदेशं विनिवेशितानि परं प्रीणयन्त्यगदङ्कारवर्गमुपकुर्वन्ति च जीवलोकम् ।

अष्टाङ्गहृदयादपि सारमेवोद्धृत्य नातिसंक्षेपविस्तरेण प्रतिपादयितुमुद्युक्तः पण्डितराजो ग्रन्थविस्तरभियेव त्रिषष्टिरसभेदान्, त्रिषष्टिदोषभेदांश्चेत्येवमादीनर्थान् प्रपञ्चयितुं नोद्युङ्क्ते । तत्र तत्र च यथासंभवं सारमलोपयन् संक्षेपेण चार्थबोधनाय प्रवर्तते ।

ओषधीनां च पोषणं च रक्षणं चावश्यकर्तव्यं वेदेऽपि प्रस्तूयते। कुसुमफलादिजननेऽसमर्थानां दुर्बलानां चाशोकादीनां परिपोषणार्थं दोहदयोगाः प्रयोजिता आसन्निति काव्येभ्योऽप्युपलभामहे। कालेन तु वनानां लुप्तप्रायत्वात्फलप्रदानां औषधोपयोगिनां च बहूनां वीरुद्वृक्षवनस्पतिवानस्पत्यानामपि विरलत्वमनुभूयते तत्प्रयुक्तः क्लेशश्च। अत एव च महावृक्षाणामोषधीनां सुगन्धीनां च लतादीनां परिपोषणं विशेषतोऽस्मिन्कालेऽवश्यकर्तव्यं समुद्घुष्यते वनमहोत्सवादिप्रस्तावेन राजकीयैरपि। तदेवंविधप्रयत्नशीलानां महदुपकरोतीवोद्यानवर्गः। वर्गे ह्यस्मिन् उद्याननिर्माणं, बीजकल्पना, लताद्युपहतिकालः, वृक्षसेचनकालः, धूपयोगाः, प्रोक्षणादियोगाः, सरलताद्राक्षादाडिममातुलुङ्गीबीजपूरकपित्थबदरीकेतकीचम्पकपोषणयोगाः, बीजरोपण, फलपाकजनन, निरन्तफलदयोगाः, अङ्कोलतैलकल्पनाः, फलानां बृहत्वकरा वैचित्र्यकराश्च कल्पाः सप्रपञ्चं प्रतिपादिताः सत्यमनुरञ्जयेयुर्भिषजो वणिजः कृषीवलान् रसिकांश्च।

अष्टाङ्गहृदयकल्पस्थाने साम्प्रतमुपलभ्यमाने विद्यमानानां वमनविरेचनवस्तिकल्पभेषजाध्यायानां सूत्रस्थान एव पञ्चकर्मप्रस्तावे यथायथं ग्रथनं रचयता पण्डितराजेन पुरस्कृतः साधीयानयं क्रमभेदः पूर्वमेवोपोद्घातितो हेमाद्रिणा अष्टाङ्गहृदयं व्याख्यातुं प्रवृत्तेनेत्यवगम्यते मुम्बईपुरमुद्रापिताष्टाङ्गहृदयोपोद्घातात्। तत्र ह्येवं प्रस्तूयते। "हेमाद्रिणा आयुर्वेदरसायनाख्यायां टीकायां अष्टाङ्गहृदयस्याध्यायानुक्रमो नैवानुसृतः। किं तु भिन्नस्थानान्तर्गतानामपि प्रस्तुतप्रकरणानुसम्बद्धानामध्यायानां विषयानुक्रमेण कृतं व्याख्यानम्। तद्यथा—आदौ सूत्रस्थानीयाः पञ्चदशाध्यायाः मूलग्रन्थानुक्रमेण व्याख्याताः। ततः सूत्रस्थानीयाः षोडशः सप्तदशः अष्टादशश्चाध्याया व्याख्याताः। तत्पश्चात्कल्पसिद्धिस्थानीयो वमनविरेचनव्यापत्सिद्धिनामा तृतीयोऽध्यायो व्याख्यातः। तत ऊर्ध्वं कल्पसिद्धिस्थानीयो वमनकल्पनामा प्रथमोऽध्यायो व्याख्यातः। अन्ततश्च विरेचनकल्पनाम्नो द्वितीयस्याध्यायस्य कृतं व्याख्यानम्। एतदनन्तरं पुनः सूत्रस्थानीयैकोनविंशतितमस्याध्यायस्य, तदनन्तरं कल्पसिद्धिस्थानीयस्य पञ्चमाध्यायस्य, तत ऊर्ध्वं सूत्रस्थानीयानामुपरितनानामेकादशाध्यायानां कृतं व्याख्यानम्।

या चेयं पद्धतिः सूत्रकल्पसिद्धिस्थानव्याख्यानावसरे स्वीकृता सैव निदानचिकित्सितस्थानव्याख्यानावसरेऽप्यवलम्बिता इति [illegible] ज्ञायते । किञ्च विशिष्येयं पद्धतिः [illegible] संग्रह-सौकर्यमत्र हेतुरिति कल्पसिद्धिस्थानीयव्याख्यानारम्भे [illegible] "कल्पस्था-नोक्तोऽपि द्रव्यकल्पोऽत्रैव व्याख्यातो [illegible] इति [illegible] हेमाद्रिणा स्वयं प्रदर्शितः" इति ।

आयुर्वेदशास्त्रे हि प्राचीनैरर्वाचीनैश्च [illegible] ग्रन्थाः निबद्धाः कति-चनोपलभ्यन्ते कतिचिन्न । उपलभ्यमानानां [illegible] परिशीलनेन तु चरकसुश्रुतसंहिते एव सर्वापेक्षया [illegible] विशेषतः प्रमाणी-कुर्वन्तोऽन्ये तन्त्राणि तन्वते स्म । चरकसुश्रुतवाग्भटसंहितासु अन्यासु च तथाविधासु प्राचीनसंहितासु नाडीविज्ञानादेः [illegible] रोगविज्ञानोपायेषु न कीर्त्यते । अर्वाचीनेषु तथा द्रविडदेशस्थ [illegible] नाडी-विज्ञानस्य मुख्यतां स्थानमुपलभ्यते । नाडीविज्ञानं [illegible] निरूपणाभ्या-सैकगम्यम्, सिद्धमहापुरुषैरनुभूतम् [illegible] दर्शनस्पर्शनप्रश्नैः, प्रश्नसहकृतैः [illegible] प्राच्य इति तु मन्महे । एवं [illegible] नाडीपरीक्षादिविधिर्न प्रकाश्यते ।

आयुर्वेदशास्त्रेषु हि वर्तमानानि भेषजानि द्विविधानि ; एकत्र वीरुद्वनस्प-त्यादिमूलिकाप्रयोगप्रचुरं विरलरसौषधं च ; अन्यत्र तु रसगन्धकलोहपाषाणादि-रसौषधप्रयोगप्रचुरं विरलौषधिमूलिकाप्रयोगम् । तत्र प्राचीनसंहितासु प्रथमं प्रस्थानमादृतं अर्वाचीनासु तु द्वितीयम् । साम्प्रतं तु समप्राधान्यमुभयोर्मन्यते । प्रथमप्रस्थानाश्रयणे भेषजमात्राया भूयस्त्वा [illegible] दीर्घोपयोगप्रसक्तिं बीभत्सरूपतापत्तिं चेत्येवमादिक्लेशजाताद्विजन्तो रसौषधप्रस्थानपराः प्रतीयन्ते । प्राञ्चस्तु तदुपयोगगुणज्ञा अपि सर्वजनसाधारण्येन प्रयोक्तुमशक्यत्वं, अल्पशोऽपि वा मात्रादिविभ्रंशे महात्ययकरत्वं, शोधनादिसंस्कारक्रियाकलापसम्पादनमहाक्लेशाव-हत्वं चेत्येवमादीनन्यांश्च दोषानुत्प्रेक्षमाणाः तेषां बहिःपरिमार्जनाद्यौपयिकत्वेन तत्र तत्र प्रयोगमनुमन्यमाना अपि अन्तःपरिमार्जनादिरूपेण सेवनीयत्वं भूयसा न

प्रदर्शितवन्तः । एवमेव चिकित्सातिलकेऽपि रसौषधानां स्थानम् । अर्वाचीनसंहितासु चिकित्सातिलकस्य तदुक्तीनां वा प्रमाणत्वेन अनुवादादिरूपेणापि वा निर्देशादर्शनात् नामवंशादिपर्यालोचनाच्च मन्यामहे पण्डितराजश्रीनिवासार्यस्य नातिप्राचीनतां नात्यर्वाचीनतां कर्नाटकादिदक्षिणपश्चिमभारतंप्रसूतत्वं आन्ध्रभाषानाम्नां तत्र तत्रोपलम्भेन आन्ध्रदेशजातत्वं वा । एतावता नातिप्रचारिततन्त्रतां चाशङ्कामहे ।

पण्डितराजोऽयं विष्णुमतावलम्बी दत्तात्रेयभक्तः आस्तिकाग्रणीरिति तदीयपद्यैरेभिः स्पष्टं प्रतीयते—

" विश्वं विष्णुर्यः ससर्ज यस्तु धन्वन्तरिः स्वयम् ।
दत्तात्रेयात्मको यस्तु सौश्रुतानग्निवेशकान् ॥
सर्वलोकोपकारार्थमायुर्वेदमजिग्रहत् ।
पण्डितश्रीनिवासीयचिकित्सातिलके तु सः ॥
नित्यं संनिहितो भूत्वा कल्याणानि करोतु वः ।
दत्तात्रेयमहं नत्वा ॥ "

" पुरा येनैव यत्प्रोक्तं तत्संगृह्य मयाधुना ।
प्रोक्तं शास्त्रमहं तस्मै विष्णवे सन्निवेदये ॥
यथा सुधांशोरमृतमर्पयन्ति मनीषिणः । "

" ब्राह्मे मुहूर्ते चोत्थाय ध्यायेद्देवमधोऽक्षजम् ।

" विष्णोर्नैवेद्यशेषं तु भुञ्जीयाद् बन्धुभिः सह ॥ "

" यशस्यं स्वर्ग्यमायुष्यं धनधान्यविवर्धनम् ।
देवतापितृविप्राणां पूजनं गोत्रवृद्धिदम् ॥ "

" दत्तात्रेयप्रसादात्तु सर्वाभीष्टफलप्रदाव ।
श्रीमद्वैजश्रीनिवासपण्डितीयेऽतिकौतुके ॥
चिकित्सातिलके सूत्रस्थानमद्य समाप्यते । " इति ।

स्वग्रन्थनिर्माणकालस्य देशस्य वा अकीर्तनेऽपि स्ववंशावल्यादिकं तु स्वेनैव प्रस्तूयते, यथा—

" दत्तात्रेयमहं नत्वा रघुनाथाभिनन्दनः ।
पण्डितश्रीनिवासाख्यः श्रीमत्कौशिकगोत्रजः ॥
गोजनाथार्यसत्पौत्रश्चार्वेल्लकुलसंभवः ।
अध्येता पद्नार्येभ्यः ॥ " इति ।

सूत्रस्थानमुपसंहरन्पण्डितराजः स्वग्रन्थस्य बुधजनपरिशीलनां प्रार्थयमानः प्रकटयति स्वगुणोत्कर्षं विनयोद्रेकं च पद्यैरेभिः:

" कुरुध्वमस्मिन्विश्वासं विवादं न कदाचन ।
पुनरुक्तिविचारं च मा कुरुध्वं विशेषतः ॥
नानाशास्त्रानुसारेण नानामतविभेदतः ।
सुखबोधाय च प्रोक्तं तस्मात्सर्वं प्रशस्यते ॥ " इति ।

तदेवमायुर्वेदशास्त्रप्रवर्तकानां महर्षीणां मते कृतागमेनाभिनवमार्गसरेण विनीतेन विद्वत्तल्लजेन परमभागवतेनानेन रचितं सर्वाङ्गसुन्दरं सुसंपन्नं कार्त्स्न्येनाप्यबाधितार्थप्रकाशकं सर्वजनहृदयङ्गमं च चिकित्सातिलकाख्यं निबन्धरत्नमिदं हन्त ! नन्वसमग्रमेवोपलभ्यत इति महदिदमस्माकं दौर्भाग्यविलसितम् । चत्वारिंशदध्यायोपलक्षितसूत्रस्थानेन, दशाध्यायीरूपेण शारीरस्थानेन, षोडशाध्यायकलित-निदानस्थानेन, चतुर्विंशत्यध्यायालङ्कृतचिकित्सास्थानेन, अध्यायचत्वारिंशत्कात्मकोत्तरस्थानेन चेति त्रिंशदधिकशताध्यायीरूपे स्थानपञ्चकसुविभक्तार्थे सर्वाङ्गसंपूर्णे निर्मितेऽस्मिन्महाप्रबन्धे चत्वारिंशदध्यायोपलक्षितं सूत्रस्थानमात्रमुपलभ्यते मुद्राप्य नीयते च प्राकाश्यम् ।

सूत्रस्थानमात्रेणोपलभ्यमानायां मातृकायां लेखकप्रमादादिवशादक्षरदोषाः पाठदोषाश्च ये उपलक्षिताः ते चरकसुश्रुतसंहिताष्टाङ्गसंग्रहाष्टाङ्गहृदयादिसाहाय्येन यथामति परिशोधिताः । तत्र तत्र मातृकायां विद्यमानाः अनुपपन्ना अस्पष्टार्था वा प्रतीताः पाठभेदास्तत्तत्स्थलेषु अधस्ताद्रेखान्तरिताः संख्याय मुद्रापिताः । तथा क्वचित्कतिचन भाषानामानि मातृकायां विद्यमानानि तत्र तत्राधो निवेशितानि । तानि पृथक्सूच्या च प्रथ्यन्ते ।

सूत्रस्थाने समाप्ते राजमृगाङ्कमहाराजमृगाङ्कवसन्तकुसुमाकराख्या रसौषध-योगास्त्रय उपलभ्यन्ते मातृकायाम् । ग्रन्थकर्त्रा पूर्वं प्रतिज्ञातेषु तेषामनिर्देशात्, सूत्रस्थानमात्रे तेषामप्रसक्तत्वावगमात्, अष्टाङ्गहृदयच्छायानुसारिणः पण्डितराजस्य तादृशरसौषधनिबन्धनोन्मुखत्वोपपत्त्यभावाच्च प्रकरणस्य तस्य प्रक्षिप्तत्वं स्यादिति शक्यं सुस्पष्टमभ्यूहितुमिति तदौषधत्रितयं भेषजपरिशिष्टशीर्षकेण ग्रन्थान्ते पृथगेव निगुम्फितम् ।

अष्टाङ्गहृदयस्थानामर्थानां यथायथं क्रमव्यत्ययेन अध्यायभेदेन स्थानभेदेन च पण्डितराजप्रतिसंस्कृते सौलभ्येनार्थावबोधाय भूयसा सत्र शीर्षकाणि, विषमस्थलेषु टिप्पणीं च संयोज्योपह्रियते निबन्धरत्नं प्रेक्षावतामल्पोऽप्यायासो मा भूदर्थावगमे इति ।

"कति कवयः कति कृतयः कति लुप्ताः कति चरन्ति कति शिथिलाः"

इत्यभियुक्तोक्तिमनुसृत्य सन्ति सहस्रशो निबन्धाः । तथापि अङ्गुलिगणनीयाः कतिपये एव त्वबाधितार्थबोधकाः त्रिवशिष्यबुद्धिहिताः लोकयोरुभयोर्हितं मञ्जुलं च वस्तु प्रकाशयन्तः । तेऽपि कतिचन मुद्रणाद्यनारूढत्वाद्विरलप्रचारा भूयांसो लुप्ताश्च । तदेवं स्थिते कालवशात्समुचितपरिपालनपरिपोषणाद्यभावेन क्षीणानां भारतीयशास्त्राणां निबन्धानधिगम्य महता यत्नेनान्विष्य परिरक्ष्य यथायथं च मुद्रापयित्वा प्रकाशने श्रद्धाध्यवसायोत्साहनिर्भरं अभिनिविष्टैः मद्रराज्यप्राच्यहस्तलिखितपुस्तकालयाध्यक्षैः श्रीमच्चन्द्रशेखरदीक्षितमहाशयैः क्रियमाणेयं महती सेवा सत्यं हस्तावलम्बमिव वितरति निपातोन्मुख्याः प्राच्यविद्यायाः इति-सन्दर्भेऽस्मिंस्तेषामभिनन्दने स्थाने खलु नः प्रवृत्तिः ।

इदंप्रथमतया प्रकाश्यमानेऽस्मिन्निबन्धे अनवधानाज्ञानादिवशात्, गच्छत स्खलनन्यायेन शक्यसंभवत्वात् दोषान् सुधियो दयया मार्जयन्तो दोषं भजतोऽपि चापस्येव गुणं गृह्णन्तः समनुगृह्णन्त्विति सभक्तिप्रश्रयमुपहारः सद्गुरुचरणयोः ॥

इत्थं
विदुषामनुचरः

मयूरपुरी
१-२-१९५३

वे. सु. वेङ्कटसुब्रह्मण्यशास्त्री
श्रीवेङ्कटरमणायुर्वेदकलाशालाध्यापकः

॥ श्रीः ॥

॥ श्री धन्वन्तरये नमः ॥

# चिकित्सातिलकसूत्रस्थानस्य

## :— विषयानुक्रमणिका —:

### ॥ वैद्याधिकाराध्यायः प्रथमः ॥



* * *

### ॥ दोषविज्ञानीयाध्यायो द्वितीयः ॥

* * *

## ॥ अग्निविभागाध्यायश्चतुर्थः ॥



* * *

## ॥ प्रकृतिलक्षणाध्यायः पञ्चमः ॥



* * *

## ॥ समधातुविज्ञानाध्यायः षष्ठः ॥



* * *

## ॥ रसभेदीयाध्यायः सप्तमः ॥

* * *

## ॥ द्रव्यविज्ञानाध्यायोऽष्टमः ॥

* * *

## ॥ रोगविज्ञानाध्यायो नवमः ॥



* * *

## ॥ द्विविधोपक्रमणीयाध्यायो दशमः ॥

* * *

## ॥ दोषोपक्रमणीयाध्याय एकादशः ॥

## ॥ दिनचर्याध्यायो द्वादशः ॥

* * *

## ॥ ऋतुचर्याध्यायस्त्रयोदशः ॥

* * *

## ॥ रोगानुत्पादनीयाध्यायश्चतुर्दशः ॥

* * *

## ॥ द्रवद्रव्यविज्ञानीयाध्ययः पञ्चदशः ॥

## ॥ अन्नविज्ञानीयाध्यायः षोडशः ॥

## ॥ अन्नरक्षाध्यायः सप्तदशः ॥



* * *

## ॥ मात्राशितीयाध्यायोऽष्टादशः ॥

* * *

## ॥ शोधनादिगणाध्याय एकोनत्रिंशः ॥



* * *

## ॥ स्नेहविध्यध्यायो विंशः ॥



* * *

## ॥ स्वेदविध्यध्याय एकविंशः ॥

* * *

## ॥ वमनविरेकाध्यायो द्वाविंशः ॥

* * *

## ॥ वमनकल्पाध्यायस्त्रयोविंशः ॥

* * *

## ॥ विरेककल्पाध्यायश्चतुर्विंशः ॥

* * *

## ॥ वमनविरेचनव्यापत्सिद्ध्यध्यायः पञ्चविंशः ॥



* * *

## ॥ वस्तिविध्यध्यायः षड्विंशः ॥

## ॥ वस्तिकल्पाध्यायः सप्तविंशः ॥

## ॥ वस्तिव्यापत्सिद्ध्यध्यायोऽष्टाविंशः ॥

x x x

## ॥ भेषजकल्पाध्याय एकोनत्रिंशः ॥

x x x

## ॥ नस्यविध्यध्यायस्त्रिंशः ॥

x x x

## धूमविध्यध्याय एकत्रिंशः ॥

x x x

## ॥ गण्डूषविध्यध्यायो द्वात्रिंशः ॥

x x x

## ॥ आश्चोतनाञ्जनविध्यध्यायस्त्रयस्त्रिंशः ॥

* * *

## ॥ तर्पणपुटपाकविध्यध्यायश्चतुस्त्रिंशः ॥

* * *

## ॥ यन्त्रविध्यध्यायः पञ्चत्रिंशः ॥

* * *

## ॥ शस्त्रविध्यध्यायः षट्त्रिंशः ॥

* * *

## ॥ सिराविध्यध्यायः सप्तत्रिंशः ॥

* * *

## ॥ शल्याहरणविध्यध्यायोऽष्टात्रिंशः ॥

## ॥ शस्त्रविध्यध्याय एकोनचत्वारिंशः ॥

## ॥ क्षाराग्निकर्मविध्यध्यायश्चत्वारिंशः ॥

# चिकित्सातिलकसूत्रस्थाने मातृकायां विद्यमानानां

## भाषानाम्नां सूची

| संख्या | भाषानाम | प्रकरणम् | पृष्ठसंख्या |
|---|---|---|---|
| १. | शुण्डेकर्पूरम् | कर्पूरगुणाः | ६४ |
| २. | पच्चैकर्पूरम् | अमरकर्पूरगुणाः | ६४ |
| ३. | चीनि | चीनकर्पूरगुणाः | ६४ |
| ४. | पन्नीरगुणम् | पुष्पद्रवगुणाः | ६४ |
| ५. | चन्दनगुण्ड | चन्दनगुणाः | ६५ |
| ६. | अकिल् | अगरुगुणाः | ६६ |
| ७. | चान्दु | अगरुस्नेहगुणाः | ६६ |
| ८. | कुङ्कुमपू | कुङ्कुमकुसुमगुणाः | ६७ |
| ९. | पच्चैपुनुगु | गन्धमार्जारवीर्यगुणाः | ६८ |
| १०. | तट्टपुनुकु | गन्धमार्जारवीर्यगुणाः | ६८ |
| ११. | जव्वादु | मृगमदगुणाः | ६८ |
| १२. | संपगि | चम्पकगुणाः | ६९ |
| १३. | पुन्नपु | पुन्नागकुसुमगुणाः | ६९ |
| १४. | मोल्लपू | यूथिकाकुसुमगुणाः | ७० |
| १५. | मल्लिके | मल्लिकाकुसुमगुणाः | ७० |
| १६. | कोण्डुमल्लि | कुटजमल्लिकाकुसुमगुणाः | ७० |
| १७. | यिरुवाक्षि | वासन्तीकुसुमगुणाः | ७० |
| १८. | जवन्ति | शतपत्रिकाकुसुमगुणाः | ७० |
| १९. | अलरि | करवीरकुसुमगुणाः | ७१ |
| २०. | चंगल्वपू | सौगन्धिककुसुमगुणाः | ७१ |
| २१. | कल्वपू | इन्दीवरकुसुमगुणाः | ७१ |
| २२. | तामरपू | पद्मगुणाः | ७१ |
| २३. | वट्टिवेरु | ह्रीबेरगुणाः | ७२ |

| संख्या | भाषानाम | प्रकरणम् | पृष्ठसंख्या |
|---|---|---|---|
| २४. | मरु | मरुबकगुणाः | ७२ |
| २५. | वेळ्ळपिडवै | श्वेतवस्त्रधारणगुणाः | ७४ |
| २६. | काविचीर | काषायवस्त्रधारणगुणाः | ७४ |
| २७. | पसुपुचीर | हारिद्रवस्त्रधारणगुणाः | ७४ |
| २८. | येसचीर | अरुणवस्त्रधारणगुणाः | ७४ |
| २९. | चन्द्रकाविचीर | माञ्जिष्ठवस्त्रधारणगुणाः | ७४ |
| ३०. | नेळ्ळपट्टुमुदलैनविशुष्म | क्षौमादिवस्त्रधारणगुणाः | ७४ |
| ३१. | चोक्कायी | कूर्पासादिधारणगुणाः | ७४ |
| ३२. | जगॅा | वारवाणगुणाः | ७५ |
| ३३. | तल्चुट्ट | उष्णीषगुणाः | ७५ |
| ३४. | कंबळी | कम्बळगुणाः | ७५ |
| ३५. | ऋतुवुळ्ळुवस्त्रधारणविशेषम् | ऋतुभेदेनवस्त्रविशेषः | ७५ |
| ३६. | गोड्डु | छत्रगुणाः | ७६ |
| ३७. | पादरक्ष | पादुकागुणाः | ७६ |
| ३८. | पापकोळ | पादुकायानम् | ७६ |
| ३९. | काळात्रि | स्वर्णादिकाळाची | ७६ |
| ४०. | दन्तधावनं कानिवार | दन्तधावनवर्ज्याः | ७७ |
| ४१. | नाळिकशोधनम् | जिह्वावलेखनगुणाः | ७७ |
| ४२. | टेंकायाकुताटच्याकुभोजनम् | नारिकेलपत्रभोजनगुणाः | ७८ |
| ४३. | तेकेकु | शाकपत्रपात्रभोजनगुणाः | ७९ |
| ४४. | जिल्लेडाकु | अर्कपत्रपात्रभोजनगुणाः | ७९ |
| ४५. | आमिदपाकु | एरण्डपत्रपात्रभोजनगुणाः | ७९ |
| ४६. | पालुगलपत्रम् | क्षीरिवृक्षपत्रभोजनगुणाः | ७९ |
| ४७. | दामरपाकु | पद्मपत्रभोजनगुणाः | ७९ |
| ४८. | नाल्गुकालपीठम् | पीठलक्षणम् | ८० |
| ४९. | ऋतुविशेषत्तिल् आहारकालम् | पूर्वाह्णादिभोज्या ऋतवः | ८० |

॥ श्रीः ॥

# ॥ चिकित्सातिलकम् ॥



## सूत्रस्थाने प्रथमोऽध्यायः

॥ मङ्गलाचरणम् ॥

श्रीधन्वन्तरये नमः

विश्वं विष्णुर्यः ससर्ज यस्तु धन्वन्तरिः स्वयम् ।
दत्तात्रेयात्मको यस्तु [1]सौश्रुतानग्निवेशकान् ॥ १
सर्वलोकोपकारार्थमायुर्वेदमजिग्रहत् ।
पण्डितश्रीनिवासीयचिकित्सातिलके तु सः ॥ २
नित्यं सन्निहितो भूत्वा कल्याणानि करोतु वः ।

॥ ग्रन्थकर्तुर्वंशानुवर्णनं प्रतिज्ञा च ॥

दत्तात्रेयमहं नत्वा रघुनाथार्यनन्दनः ॥ ३
पण्डितश्रीनिवासाख्यः श्रीमत्कौशिकगोत्रजः ।
ऐज[2]नागार्यसत्पौत्रश्चार्वेल्कुलसंभवः ॥ ४
अध्येता पद्मनार्येभ्यश्चायुर्वेदकलानिधिम् ।
चिकित्सातिलकं वक्ष्ये पूर्वोक्ताखिलसङ्ग्रहम् ॥ ५
लक्ष्यलक्षणसंयुक्तं स्थानपञ्चकसंयुतम् ।
कायबालग्रहोर्ध्वाङ्गशल्यदंष्ट्राजरा[3]वृषैः ॥ ६
अष्टाङ्गैश्च समायुक्तं वैशद्याय स्वचेतसः ।
तस्मादत्राश्रिता सर्वचिकित्सा चरणैर्युता ॥ ७

---

1. सुश्रुताद्या 2. नाग 3. वृषान्

॥ अनुपक्रमव्याधिलक्षणम् ॥

अनुपक्रम एव स्यात् स्थितोऽत्यन्तविपर्यये ॥ १४
औत्सुक्यमोहारति[1]कृद् दृष्टरिष्टोऽक्षनाशनः ।

॥ त्याज्यरोगिनिरूपणम् ॥

त्यजेदार्तं भिषग् भूपैर्द्विष्टं तेषां द्विषं द्विषम् ॥ १५
हीनोपकरणं व्यग्रमविधेयं गतायुषम् ।
चण्डं शोकातुरं भीरुं कृतघ्नं वैद्यमानिनम् । १६
एतानुपचरन्वैद्यो बहून्दोषानवाप्नुयात् ।
एभ्योऽन्ये समुपक्रम्या [2]नरास्सर्वैरुपक्रमैः ॥ १७

॥ चिकित्सितनिष्क्रयस्यावश्यकत्वम् ॥

चिकित्सितशरीरं यो न निष्क्रीणाति दुर्मतिः ।
स यत्करोति सुकृतं तत्फलं भिषगश्नुते ॥ १८

॥ चिकित्सासाफल्यनिरूपणम् ॥

क्वचिद्धर्मः क्वचिन्मैत्री क्वचिदर्थः क्वचिद्यशः ।
कर्माभ्यासः क्वचिच्चेति चिकित्सा नास्ति निष्फला ॥ १९
नैव कुर्वीत लोभेन चिकित्सापण्यविक्रयम् ।
यदि विक्रयते वैद्यः स तुषे रत्नविक्रयी ॥ २०
ईश्वराणां वसुमतां लिप्सेतार्थं तु वृत्तये ।

॥ भिषजः कर्तव्यं ॥

विसृजत्यात्मनात्मानं न चैनं परिशङ्कते ॥ २१
तस्मात्पुत्रवदेवैनं पालयेदातुरं भिषक् ।

॥ आयुर्वेदलक्षणम् ॥

आयुर्हिताहितं व्याधेर्निदानं शमनं तथा ॥ २२
विद्यते यत्र धीमद्भिः स आयुर्वेद उच्यते ।

---

1. क्षुद्युक्‌ः 2. द्रुवेः

॥ आरोग्यदानप्रशंसा ॥

आकाशस्य यथा नान्तः कैश्चिदप्युपलभ्यते ॥ २३

तद्वदारोग्यदानस्य नान्तः संविद्यते महान् ।

॥ सुश्रुतोक्तक्रमवर्त्तनम् ॥

[1]पीडितं सर्वरोगाद्यैरपि धन्वन्तरिः स्वयम् ॥ २४

[2]स्वस्थं कर्तुं न शक्नोति [3]काले प्राप्ते हि देहिनम् ।

नौषधं न तपो दानं न मित्रं न च [4]बान्धवाः ॥ २५

न शक्नुवन्ति परित्रातुं नरं कालेन पीडितम् ।

॥ ग्रन्थान्तर्गता अध्यायाः ॥

चिकित्सातिलकस्यास्य वक्ष्यतेऽध्यायसंग्रहः ॥ २६

॥ सूत्रस्थानाध्यायाः ॥

वैद्यदोषादितद्भेदवृद्धिप्रकृतिलक्षणम् ।

सप्तधातुरसद्रव्यरोगविज्ञानसंज्ञिकाः ॥ २७

द्विविधोपक्रमश्चैव दोषोपक्रमणीयकम् ।

दिनर्तुचर्यारोगानुत्पादनीयद्रवात्मकाः ॥ २८

अन्नसंरक्षणो मात्रा गुर्वन्नादिस्नेहनामकाः ।

( स्नेहोरेको रेककल्प तद्व्यापत्सिद्धिवस्तिकाः ॥ ) २९

स्वेदरेकौ [5]छर्दिरेककल्पतत्सिद्धिवस्तिकाः ।

तत्कल्प [6]सिद्धिकद्रव्यकल्पना [7]नस्यकल्पना ॥ ३०

धूमगण्डूषदृक्सेकतृप्तियन्त्रकशास्त्रकम् ।

सिराविधिः शल्यविधिः शस्त्रक्षाराग्निकर्मकौ ॥ ३१

चत्वारिंशदिमेऽध्यायाः सूत्रस्थानमुदाहृतम् ।

---

1 पण्डितं 2. वस्थो

3. काले प्राप्ते 4. बान्धवम्

5. वमन 6. तथावस्त 7. समकीर्तिताः

॥ शारीरस्थानाध्यायाः ॥

संभोगसाधनं गर्भाक्रान्तिस्तन्निपीडनम् ॥ ३२
वन्ध्याविज्ञानतद्व्याधिचिकित्साङ्गविभागिकम् ।
मर्मविज्ञानविकृतिस्वप्नदूता दश क्रमात् ॥ ३३
स्थानं शारीरमाख्यातं

॥ निदानस्थानाध्यायाः ॥

निदानं सार्वरोगिकम् ।
ज्वरास्रकश्वासयक्ष्मादिमदाद्यर्शोऽतिसारिणाम् ॥ ३४
मूत्राघातप्रमेहाणां विद्रध्याद्युदरस्य च ।
पाण्डुकुष्ठानिलार्तानां वातास्रस्य षडुत्तरम् ॥ ३५
दशाध्यायं स्थानमिदं

॥ चिकित्सास्थानाध्यायाः ॥

रुङ्निवृत्तिस्ततः परम् ।
पथ्यक्रमे ज्वरे रक्ते कासे श्वासे च यक्ष्मणि ॥ ३६
वमौ मदात्ययेऽर्शस्सु विशि द्वौ द्वौ च मूत्रिते ।
विद्रधीगुल्मजठरपाण्डुशोफविसर्पिषु ॥ ३७
कुष्ठश्वित्रानिलव्याधिवातास्रेषु चिकित्सितम् ॥
चतुर्विंशतिरध्यायाः स्थानं स्याद्रुङ्निवर्तनम् ।
(विंशाध्याययुतं स्थानं स्याद्रुग्नीनिकर्तनम् ॥) ३८
एतावत्पूर्वमाख्यातं

॥ उत्तरस्थानाध्यायाः ॥

उच्यते त्वत उत्तरम् ।
बालादिवृषपर्यन्तं पथ्यानुक्रमणीयके ॥ ३९
बालोपचारे तद्व्याधौ [1]तद्ग्रहे द्वौ च मूतगौ ।
उन्मादे च स्मृतिभ्रंशे द्वौ द्वौ वर्त्मसु [2]सन्धिषु ॥ ४०

---

1. तद्गृहे 2. सक्थिषु

## ॥ अथ द्वितीयोऽध्यायः ॥

॥ अथातो दोषविज्ञानीयं व्याख्यास्यामः ॥

॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥

**॥ दोषपर्यायनिरुक्तिः ॥**

रसादिदूषणाद्दोषा मलिनीकरणान्मलाः ।
वातपित्तकफाश्चैते धातवो देहधारणात् । १

**॥ दोषाणां प्रभावः ॥**

वायुः पित्तं कफश्चेति त्रयो दोषास्समासतः ।
विकृताविकृता देहं घ्नन्ति ते वर्तयन्ति च ॥ २
दोषधातुमला मूलं सदा देहस्य

**॥ अविकृतवायोः कर्माणि ॥**

तच्चलः ।
उत्साहोच्छ्वासनिश्वासचेष्टावेगप्रवर्तनैः । ३
सम्यग्गत्या च धातूनामक्षाणां पाटवेन च ।
अनुगृह्णात्यविकृतः

**॥ अविकृतपित्तस्य कर्माणि ॥**

पित्तं [1]पक्त्यूष्मदर्शनैः । ४
क्षुत्तृड्रुचिप्रभामेधाधीशौर्यतनुमार्दवैः ।

**॥ अविकृतस्य श्लेष्मणः कर्माणि ॥**

श्लेष्मा स्थिरत्वस्निग्धत्वसन्धिबन्धक्षमादिभिः । ५

---

1. पत्यूष्म

॥ आश्रयाश्रयिभावचर्णनस्य फलम् ॥

तेनैषामाश्रयाश्रयिणां मिथः ॥ ११

यदेकस्य तदन्यस्य वर्धनक्षपणौषधम् ।

॥ अस्यापवादस्तत्समर्थनं च ॥

अस्थिमारुतयोर्नैवं प्रायो वृद्धिर्हि तर्पणात् ॥ १२

श्लेष्मणानुगता तस्मात् संक्षयस्तद्विपर्ययात् ।

वायुनानुगतः

॥ वृद्धिक्षयचिकित्सासूत्रम् ॥

अस्माच्च वृद्धिक्षयसमुद्भवान् ॥ १३

विकारान्साधयेच्छीघ्रं क्रमाल्लङ्घनबृंहणैः ।

वायोरन्यत्र ; तज्जांस्तु तैरेवोत्क्रमयोजितैः ॥ १४

बृंहणं यद् बृहत्त्वाय लङ्घनं लाघवाय यत् ।

॥ ऋतुविभागेन दोषाणां चयकोपशमवर्णनम् ॥

[1]चयप्रकोपप्रशमा वायोर्ग्रीष्मादिषु त्रिषु ॥ १५

वर्षादिषु च पित्तस्य श्लेष्मणश्शिशिरादिषु ।

॥ उक्तस्यार्थस्य समर्थनम् ॥

उष्णेन युक्ता रूक्षाद्या वायोः कुर्वन्ति संचयम् । १६

शीतेन कोपमुष्णेन शमं स्निग्धादयो गुणाः ।

शीतेन युक्तास्तीक्ष्णाद्याः[2]चयं पित्तस्य कुर्वते ॥ १७

उष्णेन कोपं मन्दाद्याः शमं शीतोप[3]संहिताः ।

शीतेन युक्तास्स्निग्धाद्याः कुर्वते श्लेष्मणश्चयम् ॥ १८

उष्णेन कोपं तेनैव गुणा रूक्षादयश्शमम् ।

---

1. द्वयं प्रमोपप्रशमौ 2. द्वयं 3. संहिताद्

॥ चयलक्षणम् ॥

चयो वृद्धिः स्वधाम्न्येव प्रद्वेषो वृद्धिहेतुषु ॥ १९
विपरीतगुणेच्छा च

॥ कोपलक्षणम् ॥

कोपस्तून्मार्गगामिता ।
लिङ्गानां दर्शनं स्वेषामस्वास्थ्यं रोगसंभवः ॥ २०

॥ प्रशमलक्षणम् ॥

स्वस्थानस्थस्य समता विकारासंभवश्शमः ।

॥ रसोपलक्षितदोषस्वरूपम् ॥

कट्वम्ललवणं पित्तं स्वाद्वम्ललवणः कफः ॥ २१
कषायतिक्तकटुको वायुर्दृष्टोऽनुमानतः ॥ २२

इति श्रीश्रीनिवासपण्डितविरचिते चिकित्सातिलके सूत्रस्थाने
दोषविज्ञानीयं नाम द्वितीयोऽध्यायः ॥

## ॥ अथ तृतीयोऽध्यायः ॥

॥ अथातो दोषभेदीयमध्यायं व्याख्यायामः ॥

इति ह स्माहुरात्रेयादयो महर्षयः ॥

॥ सामान्यतो दोषस्थानानि ॥

ते व्यापिनोऽपि हृन्नाभ्योरधोमध्योर्ध्वसंश्रयाः ।

॥ वायोः स्थानानि ॥

[1] पक्वाशयकटीसक्थिश्रोत्रास्थिस्पर्शनेन्द्रियम् ॥ १

स्थानं वातस्य तत्रापि पक्वाधानं विशेषतः ।

॥ पित्तस्य स्थानानि ॥

नाभिरामाशयः स्वेदो लसीका रुधिरं रसः ॥ २

दृक् स्पर्शनं च पित्तस्य नाभिरत्र विशेषतः ।

॥ श्लेष्मणः स्थानानि ॥

उरःकण्ठशिरःक्लोम[2]पर्वाण्यामाशयो रसः ॥ ३

मेदो घ्राणं च जिह्वा च कफस्य सुतरामुरः ।

॥ वायोः पञ्चविधत्वम् ॥

प्राणादिभेदात्पञ्चात्मा वायुः ४

॥ प्राणस्य स्थानानि कर्माणि च ॥

प्राणोऽत्र मूर्धगः ॥

उरःकण्ठचरो बुद्धिहृदयेन्द्रियचित्तधृत् ।

ष्ठीवनक्षवथूद्गारनिश्वासान्नप्रवेशकृत् । ५

॥ उदानस्य स्थानानि कर्माणि च ॥

उरः स्थानमुदानस्य नासानाभिगलांश्चरेत् ।

वाक्प्रवृत्तिप्रयत्नोर्जाबलवर्णस्मृतिक्रियः ॥ ६

---

1. पक्वाशय 2. पर्वाण्या

॥ व्यानस्य स्थानानि कर्माणि च ॥

व्यानो हृदि स्थितः कृत्स्नदेहचारी महाजवः ।
गत्यवक्षेपणोत्क्षेपनिमेषोन्मेषणादिकाः ॥ ७
प्रायः सर्वाः क्रियास्तस्मिन् प्रतिबद्धाः शरीरिणाम् ।

॥ समानस्य स्थानानि कर्माणि च ॥

[1]समानोऽग्निसमीपस्थः कोष्ठे चरति सर्वतः ॥ ८
अन्नं गृह्णाति पचति विवेचयति मुञ्चति ।

॥ अपानस्य स्थानानि कर्माणि च ॥

अपानोऽपानगः श्रोणिवस्तिमेढ्रोरुगोचरः ॥ ९
शुक्रार्तवशकृन्मूत्रगर्भनिष्क्रामणक्रियः ।

॥ पित्तस्य पञ्चविधत्वम् ॥

पित्तं पञ्चात्मकं

॥ पाचकपित्तस्य स्थानानि कर्माणि च ॥

तत्र पक्वामाशयमध्यगम् ॥ १०
पञ्चभूतात्मकत्वेऽपि यत्तैजसगुणोदयात् ।
त्यक्तद्रवत्वं पाकादिकर्मणानलशब्दितम् ॥ ११
पचत्यन्नं विभजते सारकिट्टौ पृथक्तया ।
तत्रस्थमेव पित्तानां शेषाणामप्यनुग्रहम् ॥ १२
करोति बलदानेन पाचकं नाम तत्स्मृतम् ।

॥ रञ्जकपित्तस्य स्थानानि कर्माणि च ॥

आमाशयाश्रयं पित्तं रञ्जकं रसरञ्जनात् ॥ १३

॥ साधकपित्तस्य स्थानानि कर्माणि च ॥

बुद्धिमेधाभिमानाद्यै [2]रभिप्रेतार्थसाधनात् ।
[3]साधकं हृद्गतं पित्तं

---

1. समो 2. रभिलाषा 3. साधनं

॥ आलोचकपित्तस्य स्थानानि कर्माणि च ॥

रूपालोचनतः स्मृतम् ॥ १४

दृक्स्थमा[1]लोचकं

॥ भ्राजकपित्तस्य स्थानानि कर्माणि च ॥

त्वक्स्थं भ्राजकं भ्राजनात्त्वचः ।

॥ श्लेष्मणः पञ्चविधत्वम् ॥

श्लेष्मा तु पञ्चधा

॥ अवलम्बकश्लेष्मणः स्थानानि कर्माणि च ॥

उरस्थः स त्रिकस्य स्ववीर्यतः ॥ १५

हृदयस्यान्नवीर्याच्च तत्स्थ एवाम्बुकर्मणा ।

कफधाम्नां च शेषाणां यत्करोत्यवलम्बनम् ॥ १६

अतोऽवलम्बकः श्लेष्मा

॥ क्लेदनश्लेष्मणः स्थानानि कर्माणि च ॥

यस्त्वामाशय[2]संश्रितः ।

क्लेदनः सोऽन्नसंघातक्लेदनाद्

॥ बोधकश्लेष्मणः स्थानानि कर्माणि च ॥

रसबोधनात् ॥ १७

बोधको रसनास्थायी

॥ तर्पकश्लेष्मणः स्थानानि कर्माणि च ॥

शिरः संस्थो[3]ऽक्षतर्पणात् ।

तर्पकः

---

1. आलोचनं 2. संश्रुत 3. क्षित

॥ श्लेषकश्लेष्मणः स्थानानि कर्माणि च ॥

सन्धिसंश्लेषाच्छ्लेषकः सन्धिषु स्थितः ॥ १८

॥ उपसंहारः ॥

इति प्रायेण दोषाणां स्थानान्यविकृतात्मनाम् ॥
व्यापिनामपि जानीयात् कर्माणि च पृथक् पृथक् ॥
वयोऽहो[1]रात्रिभुक्तानां तेऽन्तमध्यादिगाः क्रमात् ॥ १९

इति श्रीश्रीनिवासपण्डितविरचिते चिकित्सातिलके सूत्रस्थाने दोषभेदीयो नाम तृतीयोऽध्यायः ॥

---

1. रात्र

## ॥ अथ चतुर्थोऽध्यायः ॥

॥ अथातोऽग्निविभागाध्यायं व्याख्यास्यामः ॥

**॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥**

**॥ अग्नेश्चातुर्विध्यम् ॥**

[1]तैर्भवेद्विषमस्तीक्ष्णो मन्दश्चाग्निः समैः समः ।

**॥ समानवातगुणापेक्षतया तन्निरूपणम् ॥**

समः समानस्थानस्थे विषमोऽग्निर्विमार्गगे ॥ १
पित्ताभिमूर्छिते तीक्ष्णो मन्दोऽग्निः कफपीडिते ।

**॥ समस्य लक्षणम् ॥**

यः पचेत्सम्यगेवान्नं भुक्तं सम्यक् समस्तथा ॥ २

**॥ विषमस्य लक्षणम् ॥**

विषमोऽसम्यगप्याशु सम्यक् चापि चिरात्पचेत् ।

**॥ तीक्ष्णस्य लक्षणम् ॥**

तीक्ष्णो वह्निः पचेच्छीघ्रमसम्यगपि भोजनम् ।

**॥ मन्दस्य लक्षणम् ॥**

मन्दस्तु सम्यगप्यन्नमुपयुक्तं चिरात्पचेत् ।
कृत्वास्यशोषाटोपान्त्रकूजनाध्मानगौरवम् ॥ ३

**॥ जाठरस्य संस्थानं प्रभावश्च ॥**

जाठरोऽग्निर्नाभेर्वामपार्श्वे [2]ग्रहण्याख्यायां पित्तधरायां कलायामवस्थितः ।
सवितृवत्, एकदेशस्थोऽपि सर्वानुग्रहतया,
सर्वाशये [3]विक्षिप्तः, तावदाहारं पचति

---

1. तैः=दोषैः 2. गृहिण्याख्यायां 3. विस्थितः

पुष्टिं करोति [1]तत् पाचकाख्यं पित्तम् ॥ ४

॥ अत्रार्थे आत्रेयस्य मतम् ॥

दोषधातुमलादीनामूष्मेत्यात्रेयशासनम् ।

॥ ग्रहणीस्थानस्य धन्वन्तरिमते संज्ञा ॥

सैव धन्वन्तरिमते कला पित्तधराह्वया ॥ ५

॥ अग्नेस्त्रयोदश भेदाः ॥

केचन, पञ्च भूताग्नयः; धात्वग्नयः सप्त; जाठराग्निरेकः;[2] ते च पाचकाख्यपित्तांशभूता अग्नयः एवं त्रयोदशेत्याहुः ॥

॥ पाचकस्वरूपम् ॥

नाभेरूर्ध्वं वामभागे द्व्यङ्गुले यवमात्रकः ।
तिष्ठत्यग्निः पाचकाख्यः प्राणिनां कायसंस्थितः ॥ ६

॥ कोष्ठनिरूपणम् ॥

वह्नेरधिष्ठानतया कोष्ठः संप्रति कथ्यते ।
कोष्ठः क्रूरो मृदुर्मध्यो मध्यः स्यात्तैस्समैरपि ॥ ७
परस्परविरुद्धत्वान्न पित्तमरुतोर्द्वयोः ।
कार्यैक्यं, कफकार्यः स्यादविरोधे च मध्यमः ॥ ८
अधिकश्लेष्मणा मध्यो वमने व्यक्तिमेष्यति ।
समदोषस्तु यो मध्यो विरेके स सुखो भवेत् । ९

॥ कोष्ठसम्भवप्रकारः ॥

बीजद्वये संमिलिते तस्य यत्कोष्ठतां व्रजेत् ।
अङ्गं तत्राधिकैर्दोषैर्बीजगैः कोष्ठसंभवः ॥ १०

इति श्रीश्रीनिवासपण्डितविरचिते चिकित्सातिलके सूत्रस्थाने अग्निविभागो नाम चतुर्थोऽध्यायः ॥

---

1. तत्पाचकाख्यं  2. तत्र

## ॥ अथ पञ्चमोऽध्यायः ॥

### ॥ प्रकृतिलक्षणम् ॥

॥ अथातः प्रकृतिलक्षणं व्याख्यास्यामः ॥

॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥

शुक्रार्तवस्थैर्जन्मादौ विषेणेव विषक्रिमिः ।
सर्वप्राणभृतो हन्ति यथा कायगतं विषम् ॥ १
तस्मिन्नेव समुत्पन्ना दृश्यन्ते क्रिमयो यथा ।
तैश्च तिस्रः प्रकृतयो हीनमध्योत्तमाः पृथक् ॥ २
शाकादौ हिङ्गुमरिचलवणादेश्च दृश्यते ।
समत्वमधिकत्वं च तथा बीजस्य दोषतः ॥ ३

(ग) यथा विषभाविताववयवानां सर्वलूतादीनां जन्म तथा दूषणस्वभावानां दोषाणामाधिक्ये प्रकृतिर्भवेदेव ॥

शुक्रासृग्गर्भिणीभोज्यचेष्टागर्भाशयर्तुषु ।
यः स्याद्दोषोऽधिकस्तेन प्रकृतिस्सप्तधोदिता ॥ ४
समधातुः समस्तासु श्रेष्ठा निन्द्या द्विदोषजाः ।

### ॥ वातप्रकृतिलक्षणम् ॥

विभुत्वादाशुकारित्वाद्बलित्वादन्यकोपनात् ।
स्वातन्त्र्याद् बहुरोगत्वाद्दोषाणां प्रबलोऽनिलः ॥ ५
प्रायोऽत एव पवनाध्युषिता मनुष्या
दोषात्मकाः स्फुटितधूसरकेशगात्राः ।
शीतद्विषश्चलधृतिस्मृतिबुद्धिचेष्टा-
सौहार्ददृष्टिगतयोऽतिबहुप्रलापाः ॥ ६
अल्पपित्तकफजीवितनिद्राः
सन्नसक्तजडजर्झरवाचः ।

नास्तिका बहुभुजः सविलासा
गीतहासमृगयाकलिलोलाः ॥ ७
मधुराम्लपटूष्णसात्म्यकाङ्क्षाः
कृशदीर्घाकृतयः सशब्दयाताः ।
न दृढा न जितेन्द्रिया न चार्या
न च कान्तादयिता बहुप्रजा वा ॥ ८
नेत्राणि चैषां खरधूसराणि
वृत्तान्यचारूणि मृतोपमानि ।
उन्मीलितानीव भवन्ति [1]सुप्ते
शैलद्रुमान्ये गगनं च यान्ति ॥ ९
अधन्या मत्सराध्माताः स्तेनाः प्रोद्धद्धपिण्डिकाः ।
श्वसृगालोष्ट्रगृध्राखु[2]काकानूकाश्च वातिकाः ॥ १०

॥ पित्तप्रकृतिलक्षणम् ॥

पित्तं वह्निर्वह्निजं वा यदस्मात्
पित्तोद्रिक्तस्तीव्रतृष्णाबुभुक्षः ।
गौरोष्णाङ्गस्ताम्रहस्ताङ्घ्रिवक्त्रः
शूरो मानी पिङ्गकेशोऽल्परोमा ॥ ११
दयितमाल्यविलेपनमण्डनः
सुचरितः शुचिराश्रितवत्सलः ।
विभवसाहसबुद्धिबलान्वितो
भवति भीषु गतिर्द्विषतामपि ॥ १२
मेधावी प्रशिथिलसन्धिबन्धमांसो
नारीणामनभिमतोऽल्पशुक्रकामः ।
आवासः पलिततरङ्गनीलिकानां
भुङ्क्तेऽन्नं मधुरकषायतिक्तशीतम् ॥ १३

1. सुप्तः 2. काकोलूकाश्च 3 भीरु

[1]घर्मद्वेषी स्वेदनः पूतिगन्धि-
मूर्युच्चारः शीतपानाशनेच्छः ।
सुप्तः पश्येत्कर्णिकारान् पलाशान्
[2]दिग्दाहोल्काविद्युदर्कानलांश्च ॥ १४

तनूनि पिङ्गानि चलानि चैषां
तन्वल्पपक्ष्माणि हिमप्रियाणि ।
क्रोधेन मद्येन रवेश्च भासा
रागं व्रजन्त्याशु विलोचनानि ॥ १५

मध्यायुषो मध्यबलाः पण्डिताः क्लेशभीरवः ।
व्याघ्रर्क्षकपिमार्जारयक्षानूकाश्च पैत्तिकाः ॥ १६

॥ श्लेष्मप्रकृतिलक्षणम् ॥

श्लेष्मा सोमः श्लेष्मलस्तेन सौम्यो
गूढश्लिष्टस्निग्धसन्ध्यस्थिमांसः ।
क्षुत्तृड्दुःखस्वेदघर्मैरतप्तो
बुद्ध्या युक्तः सात्त्विकः सत्यसन्धः ॥ १७

प्रियङ्गुदूर्वाशरकाण्डशस्त्र-
गोरोचनापद्मसुवर्णवर्णः ।
प्रलम्बबाहुः पृथुपीनवक्षा
महाललाटो घननीलकेशः ॥ १८

मृद्वङ्गः समसुविभक्तचारुवेषो
बह्वोजोरतिरसपुत्रशुक्रभृत्यः ।
धर्मात्मा वदति न निष्ठुरं च जातु
प्रच्छन्नं वहति दृढं चिरं च वैरम् ॥ १९

समदद्विरदेन्द्रतुल्ययानो
जलदाम्भोधिमृदङ्गतुल्यघोषः ।

---

1. घर्मं 2. दिग्वाहोल्का

स्मृतिमानभियोगवान्विनीतो
न च [1]बाल्येऽप्यतिरोदनो न लोलः ॥ २०
तिक्तं कषायं [2]कटुकोष्णरूक्ष-
मल्पं स भुङ्क्ते बलवांस्तथापि ।
रक्तान्तसुस्निग्धविशालदीर्घ-
सुवृत्तशुक्लासितपक्ष्मलाक्षः ॥ २१
अल्प[3]व्याहारक्रोधपानाशनेर्ष्यः
प्राज्यायुर्वीरो दीर्घसूत्री वदान्यः ।
श्राद्धो गम्भीरः स्थूललक्षः क्षमावा-
नार्यो निद्रालुर्दीर्घदर्शी कृतज्ञः ॥ २२
ऋजुर्विपश्चित्सुभगः सलज्जो
भक्तो गुरूणां दृढसौहृदय्यः ।
स्वप्ने सपद्मान् सविहङ्गमालां-
स्तोयाशयान् पश्यति तोयदांश्च ॥ २३
ब्रह्मरुद्रेन्द्रवरुणतार्क्ष्यहंसगजाधिपैः ।
श्लेष्मप्रकृतयस्तुल्यास्तथा सिंहर्क्षगोवृषैः ॥ २४

॥ संसृष्टाद्विप्रकृतयः ॥

[4]प्रकृतीर्द्वयसर्वोत्था द्वन्द्वसर्वगुणोदयैः ।
शौचास्तिक्यादिभिश्चैवं गुणैर्गुणमयीं वदेत् ॥ २५

॥ विंशतिगुणसंख्यानम् ॥

गुरुमन्दहिमस्निग्धश्लक्ष्णसान्द्रमृदुस्थिराः ।
गुणास्ससूक्ष्मविशदा विंशतिस्सविपर्ययाः ॥ २६

॥ वायोः स्वरूपम् ॥

तत्र रूक्षो लघुः शीतः खरः सूक्ष्मश्चलोऽनिलः ।

---

1. बाहुल्ये वा प्रति
2. कटुकाम्लरूक्षं
3. व्यायामाहारः शीत
4. प्रकृतिद्वयसर्वोत्थान्

॥ पित्तस्वरूपम् ॥

पित्तं सस्नेहतीक्ष्णोष्णं लघु विस्रं सरं [1]द्रवम् ॥ २७

॥ श्लेष्मस्वरूपम् ॥

स्निग्धश्शीतो गुरुर्मन्दः श्लक्ष्णो मृत्स्नः स्थिरः कफः ।

॥ संसर्गसन्निपातौ ॥

संसर्गः सन्निपातश्च तद्द्वित्रिक्षयकोपतः ॥ २८

इति श्रीश्रीनिवासपण्डितराजविरचिते चिकित्सातिलके
सूत्रस्थाने प्रकृतिलक्षणं नाम पञ्चमोऽध्यायः ॥

---

1. द्रुवम्

# ॥ अथ षष्ठोऽध्यायः ॥

## ॥ सप्तधातुविज्ञानम् ॥

॥ अथातस्सप्तधातुविज्ञानमध्यायं व्याख्यास्यामः ॥
॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥

## ॥ सप्त धातवः ॥

रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणि धातवः ।

## ॥ धातूनां कर्म ॥

[1]प्रीणनं जीवनं लेपः स्नेहो धारणपूरणे ।
गर्भोत्पादश्च धातूनां श्रेष्ठं कर्म क्रमात्स्मृतम् ॥ १

## ॥ रसवृद्धिजा विकाराः ॥

[2]रसोऽपि श्लेष्मवत्

## ॥ रक्तवृद्धिजा विकाराः ॥

रक्तं विसर्पप्लीहविद्रधीन् ॥ २
कुष्ठवातास्रपित्तास्रगुल्मोपकुश[3]कामिलाः ।
व्यङ्गाग्निसादसंमोहरक्तविण्मूत्रनेत्रताः ॥ ३

## ॥ मांसवृद्धिजा विकाराः ॥

मांसं गण्डार्बुदग्रन्थिगण्डोरूदरवृद्धताः ।
[4]कण्ठादिष्वधिमांसं च

## ॥ मेदोवृद्धिजा विकाराः ॥

तद्वन्मेदस्तथा श्रमम् । ४

---

1. प्राणनं 2. ( अत्र प्रकरणे "कुरुते" इत्यध्याहार्यम्)
3. कामिलाः 4. कम्पा

अल्पेऽपि चेष्टिते [1]श्वासं स्फिक्स्तनोदर [2]लम्बनम् ।

॥ अस्थिवृद्धिजा विकाराः ॥

अस्थ्यध्यस्थ्यधिदन्तांश्च

॥ मज्जवृद्धिजा विकाराः ॥

मज्जा नेत्राङ्गगौरवम् ॥ ५

पर्वसु स्थूलमूलानि कुर्यात्कृच्छ्राण्यरूंषि च ।

॥ शुक्रवृद्धिजा विकाराः ॥

अतिस्त्रीकामतां वृद्धं शुक्रं शुक्राश्मरीमपि ॥ ६

॥ रसक्षयजा विकाराः ॥

[3]रसे रौक्ष्यं श्रमः शोषो ग्लानिश्शब्दासहिष्णुता ।

॥ रक्तक्षयजा विकाराः ॥

रक्तेऽम्लशिशिरे प्रीतिः सिराशैथिल्यरूक्षते ॥ ७

॥ मांसक्षयजा विकाराः ॥

मांसेऽक्षग्लानिगण्ड[4]स्फिक्शुष्कता सन्धिवेदना ।

॥ मेदःक्षयजा विकाराः ॥

मेदसि स्वपनं कट्याः प्लीह्नो वृद्धिः कृशाङ्गता ॥ ८

॥ अस्थिक्षयजा विकाराः ॥

अस्थ्न्यस्थितोदः शतनं [5]दन्तकेशनखादिषु ।

---

1. श्वासः स्फिक्  2. लम्बता
3. (अत्र प्रकरणे "क्षीणे किं" इत्यध्याहार्यं ।)
4. स्फिक्  5. ह्रस्व

॥ मज्जक्षयजा विकाराः ॥

अस्थ्नां मज्जनि सौषिर्यं भ्रमस्तिमिरदर्शनम् ॥ ९

॥ शुक्रक्षयजा विकाराः ॥

शुक्रे चिरात्प्रसिच्येत शुक्रं शोणितमेव वा ॥
तोदोऽत्यर्थं वृषणयोर्मेढ्रं धूमायतीव च ॥ १०

॥ दूष्यमलसंख्यानं ॥

सप्त दूष्या मला मूत्रशकृत्स्वेदादयोऽपि च ।

॥ अविकृतमलानां कर्माणि ॥

अवष्टम्भः पुरीषस्य मूत्रस्य क्लेदवाहनम् ॥ ११
स्वेदस्य क्लेदविधृतिः

॥ पुरीषवृद्धिजा विकाराः ॥

विकारान् कुरुते बहून् ।
कुक्षावाध्मानमाटोपं गौरवं वेदनां शकृत् ॥ १२

॥ मूत्रवृद्धिजा विकाराः ॥

मूत्रं तु वस्तेर्निस्तोदं कृतेऽप्यकृतसंज्ञताम् ।

॥ स्वेदवृद्धिजा विकाराः ॥

स्वेदोऽतिस्वेददौर्गन्ध्यं कण्डूम्

॥ दूषिकादिषु वृद्धिलक्षणातिदेशः ॥

एवं च लक्षयेत् ॥ १३
दूषिकादीनपि मलान् बाहुल्यगुरुतादिभिः ।

॥ पुरीषक्षयजा विकाराः ॥

[1]पुरीषे वायुरन्त्राणि सशब्दं वेष्टयन्निव ॥ १४

1. (अत्र प्रकरणे "क्षीणे" इत्यध्याहार्यं)

कुक्षिं भ्रमति यात्यूर्ध्वं हृत्पार्श्वे पीडयन् भृशम् ।

॥ मूत्रक्षयजा विकाराः ॥

मूत्रेऽल्पं मूत्रयेत्कृच्छ्राद् विवर्णं सान्द्रमेव वा ॥ १५

॥ स्वेदक्षयजा विकाराः ॥

स्वेदे रोमच्युतिः स्तब्धरोमता स्फुटनं त्वचः ।

॥ वृद्धिक्षयहेतुनिरूपणम् ॥

वृद्धिस्समानैस्सर्वेषां विपरीतैर्विपर्ययः ॥ १६

इति श्रीश्रीनिवासपण्डितविरचितचिकित्सातिलके सूत्रस्थाने सप्तधातुविज्ञानं नाम षष्ठोऽध्यायः ॥

---

## ॥ अथ सप्तमोऽध्यायः ॥

॥ अथातो रसभेदीयमध्यायं व्याख्यास्यामः ॥

॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥

॥ षड् रसास्तेषां पूर्वपूर्वस्य बलावहत्वं च ॥

रसाः स्वाद्वम्ललवणतिक्तोषणकषायकाः ।
षड् द्रव्यमाश्रितास्ते च यथापूर्वं बलावहाः ॥ १

॥ रसानां दोषघ्नत्वं ॥

तत्राद्या मारुतं घ्नन्ति त्रयस्तिक्तादयः कफम् ।
कषायतिक्तमधुराः पित्तमन्ये तु कुर्वते ॥ २

॥ रसारम्भकभूतानि ॥

क्ष्माम्भोऽग्निक्ष्माम्बुतेजःखवाय्वग्न्यनिलगोऽनिलैः ।
द्वयोल्बणैः क्रमाद्भूतैर्मधुरादिरसोद्भवः ॥ ३

॥ मधुररसस्य गुणाः ॥

आजन्मसात्म्यान्मधुरो धातूनां कुरुते [1]बलम् ।
बालवृद्धक्षतक्षीणवर्णकेशेन्द्रियौजसाम् ॥ ४
प्रशस्तो [2]बृंहणः कण्ठ्यः स्तन्यसन्तानकृद् गुरुः ।
आयुष्यो जीवनः स्निग्धः पित्तानिलविषापहः ॥ ५

॥ मधुरात्युपयोगे दोषाः ॥

कुरुतेऽत्युपयोगेन स मेदःश्लेष्मजान् गदान् ।
स्थौल्याग्निसादसंन्यासमेहगण्डार्बुदादिकान् ॥ ६

---

1. अलम्  2. भ्राह्मणः

॥ अम्लस्य गुणाः ॥

अम्लोऽग्निदीप्तिकृत्स्निग्धो हृद्यः पाचनरोचनः ।
उष्णवीर्यो हिमस्पर्शः प्रीणनः क्लेदनो लघुः ॥ ७
करोति कफपित्तास्रं मूढवातानुलोमनः ।

॥ अम्लात्युपयोगे दोषाः ॥

सोऽत्यभ्यस्तस्तनोः कुर्याच्छैथिल्यं तिमिरं भ्रमम् ॥ ८
कण्डूपाण्डुत्ववीसर्पशोफविस्फोट[1]तृड्ज्वरान् ।

॥ लवणस्य गुणाः ॥

लवणः स्तम्भसङ्घातबन्ध[2]विध्मापनोऽग्निकृत् ॥ ९
स्नेहनः स्वेदनस्तीक्ष्णो रोचनश्छेदभेदकृत् ।

॥ लवणात्युपयोगे दोषाः ॥

सोऽतियुक्तोऽस्रपवनं खलतिं पलितं वलिम् ॥ १०
तृट्कुष्ठविषवीसर्पान् जनयेत्क्षपयेद्बलम् ।

॥ तिक्तस्य गुणाः ॥

तिक्तस्स्वयमरोचिष्णुररुचिक्रिमितृड्विषान् ॥ ११
कुष्ठमूर्च्छाज्वरोत्क्लेशदाहपित्तकफाञ्जयेत् ।
स्वेदमेदोवसामज्जशकृन्मूत्रोपशोषणः ॥ १२
लघुर्मेध्यो हिमो रूक्षः स्तन्यः कण्ठविशोधनः ।

॥ तिक्तात्युपयोगे दोषाः ॥

धातुक्षयं चलव्याधीनतियोगात्करोति सः ॥ १३

॥ कटुकस्य गुणाः ॥

कटुर्गलामयोदर्दकुष्ठालसकशोफजित् ।
व्रणावसादनः स्नेहमेदःक्लेदोपशोषणः ॥ १४

---

1. कृत्  2. द्विध्मापनो

दीपनः पाचनो रुच्यः शोधनोऽन्नस्य रूक्षणः ।
भिनत्ति बन्धान् स्रोतांसि विवृणोति कफापहः ॥ १५

॥ कटुकात्युपयोगे दोषाः ॥

कुरुते सोऽतियोगेन तृष्णां शुक्रबलक्षयम् ।
मूर्च्छामाकुञ्चनं कम्पं कटिपृष्ठादिषु व्यथाम् ॥ १६

॥ कषायस्य गुणाः ॥

कषायः पित्तकफहा लघुः स्रोतोविशोधनः ।
पीडनो रोपणः शीतः मेदःक्लेदोपशोषणः ॥ १७
आमसंस्तम्भनो ग्राही [1]रूक्षोऽति [2]त्वक्प्रसादनः ।

॥ कषायात्युपयोगे दोषाः ॥

करोति शीलितः सोऽति विष्टम्भाध्मानहृद्रुजः ॥ १८
तृट्कार्श्यपौरुषभ्रंशस्रोतोबन्धमलग्रहान् ।

॥ मधुरस्कन्धः ॥

घृतहेमगुडाक्षोलमोचतालपरूषकम् ॥ १९
अभीरुवीरापनसराजादनबलात्रयम् ।
[3]मेदे चतस्रः पर्णिन्यो जीवन्तीजीवकर्षभम् ॥ २०
मधूकं मधुकं बिम्बी विदारी श्रावणीयुगम् ।
क्षीरशुक्ला तुगाक्षीरी क्षीरिण्यः काश्मरी [4]सहे ॥ २१
क्षीरेक्षुगोक्षुरक्षौद्रद्राक्षादिर्मधुरो गणः ।

---

1. "बध्नाति वर्चोऽतिरूक्षः" इति संग्रहे स्मरणादतिशब्दोऽत्र रूक्षेणान्वेति, "तिक्तः कटुः कषायश्च रूक्षा बद्धमलास्तथा" इति पद्योत्तरं रूक्षत्वोत्कर्षस्यानुपदं वक्ष्यमाणत्वाच्च । अष्टाङ्गहृदयसूत्रस्थानव्याख्यायामरुणदत्तहेमाद्रिभ्यां तु अतिशब्दस्य परेणान्वयो निर्दिष्टः ॥

2. तूद् 3. मेधा 4. त्रिफे

॥ अम्लस्कन्धः ॥

अम्लो धात्रीफलाम्लीकामातुलुङ्गाम्लवेतसम् ॥ २२
दाडिमं रजतं तक्रं शुक्तं [1]पालेवतं दधि ।
आम्रमाम्रातकं भव्यं कपित्थं करमर्दकम् ॥ २३

॥ लवणस्कन्धः ॥

[2]वरं सौवर्चलं कृष्णं बिडं सामुद्रमौद्भिदम् ।
रोमकं पांसुजं सीसं क्षारश्च लवणो गणः ॥ २४

॥ तिक्तस्कन्धः ॥

तिक्तः पटोली त्रायन्ती [3]वालकोशीरचन्दनम् ।
भूनिम्बनिम्बकटुकतगरागरुवत्सकम् ॥ २५
नक्तमालद्विरजनीमुस्तामूर्वाऽटरूषकम् ।
पाठापामार्गकांस्याग्नो [4]गुडूचीधन्वयासकम् ॥ २६
पञ्चमूलं महद्व्याघ्री विशालातिविषावचाः ।

॥ कटुकस्कन्धः ॥

कटुको हिङ्गुमरिचकिमि जित्पञ्चकोलकम् ॥ २७
कुठेराद्या हरितकाः पित्तं मूत्रमरुष्करम् ।

॥ कषायस्कन्धः ॥

वर्गः कषायः पथ्याऽक्षः शिरीषः खदिरो मधु ॥ २८
कदम्बोदुम्बरं मुस्ता प्रवालाञ्जनगैरिकम् ।
बालं कपित्थं खर्जूरं बिसं पद्मोत्पलादि च ॥ २९

॥ रसानामुत्सर्गगुणाः सापवादाः ॥
॥ तत्र मधुररसः ॥

मधुरं श्लेष्मलं प्रायो जीर्णा[5]च्छालियवादृते ।

---

1. पारावतं 2. वरं सैन्धवं 3. वालुको
4. गडूचीधन्वयासकम् 5. च्छालीयवादृते ।

मुद्गाद्द्रोघूमतः क्षौद्रात् [1]सिताया जाङ्गलामिषात् ॥ ३०

॥ अम्लरसः ॥

प्रायोऽम्लं पित्तजननं दाडिमामलकादृते ।

॥ लवणरसः ॥

अपथ्यं लवणं प्रायश्चक्षुषोऽन्यत्र सैन्धवात् ॥ ३१

॥ तिक्तकटुकौ ॥

तिक्तं कटु च भूयिष्ठमवृष्यं वातकोपनम् ।
ऋतेऽमृतापटोलीभ्यां शुण्ठीकृष्णारसोनतः ॥ ३२

॥ कषायरसः ॥

कषायं प्रायशः शीतं स्तम्भनं चाभयां विना ।

॥ उष्णा रसाः ॥

रसाः कट्वम्ललवणा वीर्येणोष्णा यथोत्तरम् ॥ ३३

॥ शीता रसाः ॥

तिक्तः कषायो मधुरस्तद्वदेव च शीतलः ।

॥ रूक्षा रसाः ॥

तिक्तः कटुः कषायश्च [2]रूक्षा बद्धमलास्तथा ॥ ३४

॥ स्निग्धा रसाः ॥

पट्वम्लमधुराः स्निग्धाः सृष्टविण्मूत्रमारुताः ।

॥ गुरवो रसाः ॥

पटोः कषायस्तस्माच्च मधुरः परमं गुरुः ॥ ३५

॥ लघवो रसाः ॥

लघुरम्लः कटुस्तस्मात् तस्मादपि च तिक्तकः ।

इति श्रीश्रीनिवासपण्डितविरचिते चिकित्सातिलके सूत्रस्थाने
रसभेदीयो नाम सप्तमोऽध्यायः ॥

---

1. शिवाया 2. कृक्षौ बन्ध

## ॥ अथाष्टमोऽध्यायः ॥

### ॥ द्रव्यविज्ञानम् ॥

॥ अथातो द्रव्यविज्ञानीयमध्यायं व्याख्यास्यामः ॥
॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥

### ॥ द्रव्यस्य त्रैविध्यम् ॥

शमनं कोपनं स्वस्थहितं द्रव्यमिति त्रिधा ।
वक्ष्यते शमनादीनां द्विविधोपक्रमेऽङ्कम् ॥ १

### ॥ द्रव्यस्योत्कर्षः ॥

द्रव्यमेव रसादीनां श्रेष्ठं ते हि तदाश्रयाः ।

### ॥ द्रव्यनिर्वृत्तिक्रमः ॥

पञ्चभूतात्मकं तत्तु क्ष्मामधिष्ठाय जायते ॥ २
अम्बुयोन्यग्निपवननभसां समवायतः ।

### ॥ पार्थिवद्रव्यस्य स्वरूपं कर्माणि च ॥

तत्र द्रव्यं गुरु स्थूलं स्थिरगन्धगुणोल्बणम् ॥ ३
पार्थिवं गौरवस्थैर्यसंघातोपचयावहम् ।

### ॥ आप्यस्वरूपं कर्माणि च ॥

द्रवशीतगुरुस्निग्धमन्दसान्द्ररसोल्बणम् ॥ ४
आप्यं स्नेहनविष्यन्दक्लेदप्रह्लादबन्धकृत् ।

### आग्नेयस्वरूपं कर्माणि च ॥

रूक्षतीक्ष्णोष्णविशदसूक्ष्मरूपगुणोल्बणम् ॥ ५
आग्नेयं दाहभावर्णप्रकाशपचनात्मकम् ।

॥ वायव्यस्वरूपं कर्माणि च ॥

वायव्यं रूक्षविशदलघुस्पर्शगुणोल्बणम् ॥ ६
रौक्ष्यलाघववैशद्य[1]विचारग्लानिकारकम् ।

॥ नाभसस्वरूप गुणाश्च ॥

नाभसं सूक्ष्मविशदलघुशब्द[2]गुणोल्बणम् ॥ ७
सौषिर्यलाघवकरं

॥ द्रव्यमात्रस्यौषधत्वसमर्थनम् ॥

जगत्येवमनौषधम् ।
न किञ्चिद्विद्यते द्रव्यं वशान्नानार्थयोगयोः ॥ ८

॥ ऊर्ध्वगामिद्रव्यनिर्देशः ॥

द्रव्यमूर्ध्वगमं तत्र प्रायोऽग्निपवनोत्कटम् ।

॥ अधोगामिद्रव्यनिर्देशः ॥

अधोगामि च भूयिष्ठं भूमितोयगुणाधिकम् ॥ ९

॥ वीर्यद्वैविध्यम् ॥

उष्णशीतगुणोत्कर्षात्तत्र वीर्यं द्विधा स्मृतम् ।

॥ उष्णस्य गुणाः ॥

तत्रोष्णं भ्रमतृड्ग्लानिस्वेददाहाशुपाकिताः ॥ १०
शमं च वातकफयोः करोति

॥ शिशिरस्य गुणाः ॥

शिशिरं पुनः ।
ह्लादनं जीवनं स्तम्भं प्रसादं रक्तपित्तयोः ॥ ११

---

1. विचारः=विविधाचेष्टाः 2. गुणोल्बणम्

॥ उष्णशीतगुणस्य सर्वद्रव्यव्यापित्वप्रतिपादनं ॥

नानात्मकमपि द्रव्यमग्नीषोमौ महाबलौ ।
व्यक्ताव्यक्तं जगदिव नातिक्रामति जातुचित् ॥ १२

रसादीनां पृथक् प्रयोजकत्वम् ॥

किञ्चिद्रसेन कुरुते[1] कर्म पाकेन चापरम् ।
गुणान्तरेण वीर्येण प्रभावेणैव किञ्चन ॥ १३

॥ रसादीनां बलाबलविचारः ॥

यद्यद् द्रव्ये रसादीनां [2]बलवत्त्वेन वर्तते ।
अभिभूयेतरांस्तत्तत्कारणत्वं प्रपद्यते ॥ १४
विरुद्धगुणयोगेन भूयसाऽल्पं हि [3]जीयते ।
रसं विपाकस्तौ वीर्यं प्रभावस्तान्व्यपोहति ॥ १५
बलसाम्ये रसादीनामिति नैसर्गिकं बलम् ।

॥ प्रभावनिरूपणम् ॥

रसादिसाम्ये यत्कर्म विशिष्टं तत्प्रभावजम् ॥ १६
दन्ती रसाद्यैस्तुल्याऽपि [4]चित्रकस्य विरेचनी ।
मधुकस्य च मृद्वीका घृतं क्षीरस्य दीपनम् ॥ १७
इति सामान्यतः कर्म द्रव्यादीनां

॥ विचित्रप्रत्ययारब्धद्रव्ये विशेषः ॥

पुनश्च तत् ।
विचित्रप्रत्ययारब्धद्रव्यभेदेन भिद्यते ॥ १८
स्वादुर्गुरुश्च गोधूमो वातजिद्वातकृद्यवः ।
उष्णा मत्स्याः पयश्शीतं कटुस्सिंहो न सूकरः ॥ १९

---

1. कुरुतेन
2. बलपक्षेन
3. क्षीयते
4. चित्रकस्य

॥ विपाकनिरूपणम् ॥

जाठरेणाग्निना योगाद् यदुदेति रसान्तरम् ।
रसानां परिणामान्ते स विपाक इति स्मृतः ॥ २०

॥ षण्णां रसानां त्रिधा विपाकाः ॥

त्रिधा[1] विपाको द्रव्यस्य स्वाद्वम्लकटुकात्मकः ।
स्वादुः पटुश्च मधुरमम्लोऽम्लं पच्यते रसः ॥ २१
तिक्तोषणकषायाणां विपाकः [2]प्रायशः कटुः ।

॥ गुणनिरूपणम् ॥

गुरुमन्दहिमस्निग्धश्लक्ष्णसान्द्रमृदुस्थिराः ॥ २२
गुणास्ससूक्ष्मविशदा विंशतिस्सविपर्ययाः ।

॥ रसेषु गुणनिर्देशस्योपपत्तिकल्पनं ॥

गुर्वादयो गुणा द्रव्ये पृथिव्यादौ रसाश्रये ।
रसेषु व्यपदिश्यन्ते साहचर्योपचारतः ॥ २३

इति श्रीश्रीनिवासपण्डितविरचिते चिकित्सातिलके
सूत्रस्थाने द्रव्यविज्ञानं नामाष्टमोऽध्यायः ॥

---

1. विवेको
2. "स्वादुरम्लविपाकोऽन्यो व्रीहिः; कषाया मधुरा पाके; स्निग्धा वृष्या रसे कटुः । स्वादुपाका" इत्यादिदर्शनात् प्रायश इत्युक्तम् ॥

## ॥ अथ नवमोऽध्यायः ॥

### ॥ रोगविज्ञानम् ॥

॥ अथातो रोगविज्ञानमध्यायं व्याख्यास्यामः ॥

॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥

### ॥ रोगारोग्यकारणम् ॥

कालार्थकर्मणां योगो हीनमिथ्यातिमात्रकः ।
सम्यग्योगश्च विज्ञेयो रोगारोग्यैककारणम् ॥ १

### ॥ रोगारोग्यस्वरूपम् ॥

रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता ।

### ॥ द्विविधरोगनिरूपणम् ॥

निजागन्तुविभागेन रोगास्तु द्विविधा मताः ॥ २
आगन्तवोऽभिघातोत्थाः सहजाः क्षुत्तृडादयः ।

### ॥ रोगाधिष्ठानम् ॥

तेषां कायमनोभेदादधिष्ठानमपि द्विधा ॥ ३

### ॥ मनोदोषौ ॥

रजस्तमश्च मनसो द्वौ च दोषावुदाहृतौ ।

### ॥ रोगिरोगपरीक्षोपायाः ॥

दर्शनस्पर्शनप्रश्नैः परीक्षेत च रोगिणम् ॥ ४
रोगं निदानप्राग्रूपलक्षणोपशयाप्तिभिः ।

### ॥ देशभेदनिरूपणम् ॥

भूमिदेहप्रभेदेन देशमाहुरिति द्विधा ॥ ५

जाङ्गलं वातभूयिष्ठमानूपन्तु कफोल्बणम् ।
साधारणं सममलं त्रिधा भूदेशमादिशेत् ॥ ६
देशोऽल्पवारिद्रुनगो जाङ्गलस्स्वल्परोगदः ।
आनूपो विपरीतोऽस्मात्समः साधारणः स्मृतः ॥ ७

॥ कालभेदद्वयम् ॥

क्षणादिर्व्याध्यवस्था च कालो भेषजयोगकृत् ।

॥ औषधद्वैविध्यम् ॥

शोधनं शमनं चेति समासादौषधं द्विधा ॥ ८

॥ शारीरदोषाणां परमौषधम् ॥

शरीरजानां दोषाणां क्रमेण परमौषधम् ।
वस्तिर्विरेको वमनं तथा तैलं घृतं मधु ॥ ९

॥ मनोदोषपरमौषधम् ॥

धीधैर्यात्मादिविज्ञानं मनोदोषौषधं परम् ।

**इति श्रीश्रीनिवासपण्डितराजविरचिते चिकित्सातिलके सूत्रस्थाने रोगविज्ञानं नाम नवमोऽध्यायः ॥**

## ॥ अथ चतुर्दशोऽध्यायः ॥

### ॥ द्विविधोपक्रमणीयम् ॥

॥ अथातो द्विविधोपक्रमणीयं व्याख्यास्यामः ॥

॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥

### ॥ उपक्रमद्वैविध्यम् ॥

उपक्रम्यस्य हि द्वित्वाद् द्विविधोपक्रमो मतः ।
एकस्सन्तर्पणस्तत्र द्वितीयश्चापतर्पणः ॥ १
बृंहणं लङ्घनं चेति तत्पर्यायावुदाहृतौ ।
बृंहणं यद् बृहत्त्वाय लङ्घनं लाघवाय च ॥ २

### ॥ लङ्घनभेदौ ॥

शोधनं शमनं चेति द्विधा तत्रापि लङ्घनम् ।

### ॥ शोधनलक्षणं ॥

यदीरयेद्बहिर्दोषान्पञ्चधा शोधनं च तत् ॥ ३
निरूहो वमनं कायशिरोरेकोऽस्रविस्रुतिः ।

### ॥ शमनलक्षणं भेदाश्च ॥

न शोधयति यद्दोषान् समान् नोदीरयत्यपि ॥ ४
समीकरोति विषमाञ्छमनं तच्च सप्तधा ।
पाचनं दीपनं क्षुत्तृड् व्यायामातपमारुताः ॥ ५

### ॥ शमनोपक्रमे विशेषः ॥

बृंहणं [1]शमनं त्वेव वायोः पित्तानिलस्य च ।

---

1. वमनं

॥ बृंहणीयाः ॥

बृंहयेद्व्याधिभैषज्यमद्यस्त्रीशोककर्शितान् ॥ ६
भाराध्वोरःक्षतक्षीणरूक्षदुर्बलवातलान् ।
गर्भिणीसूतिकाबालवृद्धान् ग्रीष्मेऽपरानपि ॥ ७

॥ बृंहणौषधादीनि ॥

मांसक्षीरसुरासर्पिर्मधुरस्निग्धबस्तिभिः ।
स्वप्नशय्यासुखाभ्यङ्गस्नाननिर्वृतिहर्षणैः ॥ ८

॥ लङ्घनीयाः ॥

मेहामदोषातिस्निग्धज्वरोरुस्तम्भकुष्ठिनः ।
विसर्पविद्रधीप्लीहशिरःकण्ठाक्षिरोगिणः ॥ ९
स्थूलांश्च लङ्घयेन्नित्यं शिशिरे त्वपरानपि ।

॥ शोधनलङ्घनीयाः ॥

तत्र संशोधनैः स्थौल्यबलपित्तकफाधिकान् ॥ १०
आमदोषज्वरच्छर्दिरतिसारहृदामयैः ।
[1]विबन्धगौरवोद्गारहृल्लासादिभिरातुरान् ॥ ११

॥ शमनलङ्घनीयाः ॥

मध्यस्थौल्यादिकान् प्रायः पूर्वं दीपनपाचनैः ।
एभिरेवामयैरार्तान् हीनस्थौल्यबलादिकान् ॥ १२
क्षुत्तृष्णानिग्रहैर्दोषैस्त्वार्तान्मध्यबलैर्दृढान् ।
समीरणातपायासैः किमुताल्पबलैर्नरान् ॥ १३

॥ बृंहणलङ्घनयोर्विशेषः ॥

न बृंहयेल्लङ्घनीयान् बृंह्यांस्तु मृदु लङ्घयेत् ।
युक्त्या वा देशकालादिबलतस्तानुपाचरेत् ॥ १४

1. निबन्ध

बृंहणस्य सम्यग्योगलक्षणम् ॥

बृंहिते स्याद्बलं पुष्टिस्तत्साध्यामयसंक्षयः ।

॥ लङ्घनस्य सम्यग्योगलक्षणम् ॥

विमलेन्द्रियता सर्गो मलानां लाघवं रुचिः ॥ १५
क्षुत्तृट्[1]सहोदयः शुद्धहृदयोद्गार[2]कण्ठता ।
व्याधिमार्दवमुत्साहस्तन्द्रानाशस्तु लङ्घिते ॥ १६

॥ उभयोरतियोगे दोषाः ॥

अनपेक्षितमात्रादिसेविते कुरुतश्च ते ।
अतिस्थौल्यातिकार्श्यादीन् वक्ष्यन्ते ते च सौषधाः ॥ १७
रूपं तैरेव विज्ञेयमतिबृंहितलङ्घिते ।
अतिस्थौल्यापचीमेहज्वरोदरभगन्दरान् ॥ १८
काससंन्यासकृच्छ्रामकुष्ठादीनतिदारुणान् ।

॥ अतिबृंहिते उपक्रमः ॥

तत्र मेदोऽनिलश्लेष्मनाशनं सर्वमिष्यते ॥ १९
कुलत्थजूर्णश्यामाकयवमुद्गमधूदकम् ।
मस्तु[3]दण्डाहतारिष्टचिन्ताशोधनजागरम् ॥ २०
मधुना त्रिफलां लिह्याद् गुडूचीमभयां घनम् ।
व्योषाग्निमन्थत्रिफलाविलङ्गैर्गुग्गुलुं सेमां ॥ २१
खादेत्सर्वांश्चयेद्व्याधीन् मेदःश्लेषोद्भवानपि ।
अतिस्थूलशरीराणां तिलतैलं प्रगे पिबेत् ॥ २२
पिबेदसनसारस्य [4]क्वाथं वा मधुना युतम् ।

---

1. सहिपथ 2. कंरता
3. दण्डाहतं तक्रं 4. त्वागं.

॥ अतिलङ्घनोत्था रोगाः ॥

अग्निकार्श्यं भ्रमः कासस्तृष्णाधिक्यमरोचकः ॥ २३
स्नेहाग्निनिद्रादृक्श्रोत्रशुक्रौजःक्षुत्स्वरक्षयः ।
वस्तिहृन्मूर्धजङ्घोरुत्रिकपार्श्वरुजो ज्वरः ॥ २४
प्रलापोर्ध्वानिलग्लानि[1]च्छर्दिपर्वास्थिभेदनम् ।
वर्चोमूत्रग्रहाद्याश्च जायन्तेऽतिविलङ्घनात् ॥ २५

॥ कार्श्यस्य सुखसाध्यत्वम् ॥

कार्श्यमेव वरं स्थौल्यान्न हि स्थूलस्य भेषजम् ।
बृंहणं लङ्घनं वालमतिमेदोऽग्निवातजित् ॥

अचिन्तया हर्षणेन ध्रुवं संतर्पणेन च ॥ २६
स्वप्नप्रसङ्गाच्च कृशो वराह इव पुष्यति ।
न हि मांससमं किञ्चिदन्यद्देहबृहत्त्वकृत् ॥ २७

॥ स्थूलकृशयोर्भेषजानि ॥

गुरु चातर्पणं स्थूले विपरीतं हितं कृशे ।
यवगोधूममुभयोस्तद्योग्याहितकल्पनम् ॥ २८
मासद्वयं प्रभाते दशमरिचोपेतमेकताम्बूलम् ।
खात्वा सुशीतमम्भः पिबन् कृशः स्यादतिस्थूलः ॥ २९
भुक्तोत्तरं पिबति यो मनुजः कृशाङ्गः
शाल्यादिसिद्धघनशीततरां यवागूम् ।
कूष्माण्डमांसदधिदुग्धघृतैः किमुक्तैः
सुस्निग्धमांसलदृढाङ्गमरो भवेत्सः ॥ ३०

॥ कूष्माण्डकघृतम् ॥

कूष्माण्डफलसारस्य भाजने गोघृतस्य च ।
प्रस्थं निक्षिप्य विपचेत्सक्षीरं मन्दवह्निना ॥ ३१

---

I. मर्दिः

त्रिकटुत्रिफलाजाजीचातुर्जातकधान्यकम् ।
द्राक्षाखर्जूरमधुकमश्वगन्धां शतावरीम् ।    ३२
चन्दनं वालयुग्मं च त्वक्क्षीरीं कृष्णजीरकम् ।
पृथक्कर्षं प्रयोक्तव्यमेषां कल्कं यथाविधि ॥    ३३
सम्यक्पाकेऽवतार्याथ घृतार्धं शर्करां क्षिपेत् ।
तदर्धमावपेत्क्षौद्रं पिप्पल्याश्च [1]पलाष्टकम् ॥    ३४
चूर्णं दत्वा [2]पिबेत्प्रातः कृशो बृंहणहेतवे ।
वातपित्तादिरोगघ्नं घृतं कूष्माण्डनामकम् ॥    ३५

॥ अश्वगन्धादिघृतानि ॥

एवमेव विपक्तव्यमश्वगन्धां तथा वरीम् ।
विदारीं कदलीकन्दमैलेयं नारिकेलकम् ॥    ३६
धात्रीं चेक्षुरसं सम्यक् पृथग्वा मिलितं तु वा ।
रक्तपित्तहरं वृष्यं बलवर्णविवर्धनम् ॥    ३७

**इति श्रीश्रीनिवासपण्डितविरचिते चिकित्सातिलके सूत्रस्थाने द्विविधोपक्रमणीयं नाम दशमोऽध्यायः ॥**

---

आढके=आढके    1. फलाष्टकम्    2. पचेत्

## ॥ अथैकादशोऽध्यायः ॥

॥ अथातो दोषोपक्रमणीयमध्यायं व्याख्यास्यामः ॥

॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥

### ॥ वातचिकित्सा ॥

वातस्योपक्रमः स्नेहः स्वेदस्संशोधनं मृदु ।
स्वाद्वम्ललवणोष्णानि भोज्यान्यभ्यङ्गमर्दनम् ॥ १
वेष्टनं त्रासनं सेको मद्यं पैष्टिकगौडिकम् ।
स्निग्धोष्णा वस्तयो वस्तिनियमस्सुखशीलता ॥ २
दीपनैः पाचनैर्युक्ताः स्नेहाश्चानेकयोनयः ।
विशेषा[1]न्मेद्यपिशितरसतैलानुवासनम् ॥ ३

### ॥ पित्तचिकित्सा ॥

पित्तस्य सर्पिषः पानं स्वादुशीतैर्विरेचनम् ।
स्वादुतिक्तकषायाणि भोजनान्यौषधानि च ॥ ४
सुगन्धिशीतहृद्यानां गन्धानामुप [सेच] सेवनम्
सौम्या भावाः पयस्सर्पिर्विरकश्च विशेषतः ॥ ५
ऋतुचर्योक्तपित्तघ्नक्रिया सर्वा प्रशस्यते ।

### ॥ श्लेष्मचिकित्सा ॥

श्लेष्मणो विधिना युक्तं तीक्ष्णं वमनरेचनम् ॥ ६
अन्नं रूक्षाल्पतीक्ष्णोष्णं कटुतिक्तकषायकम् ।
दीर्घकालस्थितं मद्यं रतिप्रीतिः प्रजागरः ॥ ७
अनेकरूपव्यायामश्चिन्ता रूक्षं विमर्दनम् ।
विशेषाद्वमनं यूपः क्षौद्रं मेदोघ्नमौषधम् ॥ ८

---

1 स्मद्य                2. उपलेपनम्

धूमोपवासगण्डूषाः निस्सुखत्वं सुखाय च ।

॥ संसर्गसन्निपातेष्वतिदेशः ॥

उपक्रमः पृथग्दोषान्योऽयमुद्दिश्य कीर्तितः ॥ ९
संसर्गसन्निपातेषु तं यथास्वं विकल्पयेत् ।

॥ संसर्गे ऋतूपक्रमातिदेशः ॥

ग्रैष्मः प्रायो मरुत्पित्ते वासन्तः कफमारुते ॥ १०
मरुतो योगवाहित्वात्कफपित्ते तु शारदः ।

॥ दोषोपक्रमकालः ॥

चय एव जयेद्दोषान्कुपितं चाविरोधयन् ॥ ११
सर्व[1]कोपे बलीयांसं शेषदोषाविरोधनः ।

॥ शुद्धाशुद्धोपक्रमलक्षणम् ॥

प्रयोगश्शमयेद्व्याधिं योऽन्यमन्यमुदीरयेत् ॥ १२
नासौ विशुद्धः शुद्धस्तु शमयेद्यो न कोपयेत् ।

॥ दोषाणां शाखाद्यभिक्रमः ॥

व्यायामादूष्मणस्तैक्ष्ण्यादहिताचरणादपि ॥ १३
कोष्ठाच्छाखास्थिमर्माणि द्रुतत्वान्मारुतस्य च ।
दोषा यान्ति

॥ शाखाभ्यः कोष्ठनिवृत्तिक्रमः ॥

तथा तेभ्यः स्रोतोमुखविशोधनात् ॥ १४
वृद्ध्याभिष्यन्दनात्पाकात् कोष्ठं वायोश्च निग्रहात् ।
तत्रस्थाश्च विलम्बेरन् भूयो हेतुप्रतीक्षिणः ॥ १५
ते कालादिबलं लब्ध्वा कुप्यन्त्यन्याशयेष्वपि ।

---

1 दोष   2 . सत्राच

॥ अन्यस्थानगदोषचिकित्सा ॥

तत्रान्यस्थानसंस्थेषु तदीयामबलेषु तु ॥ १६
कुर्याच्चिकित्सां स्वामेव बलेनान्याभिभाविषु ।
आगन्तुं शमयेद्दोषं स्थानिनं प्रतिकृत्य वा ॥ १७

॥ तिर्यग्गतदोषोपक्रमविधिः ॥

प्रायस्तिर्यग्गता दोषाः क्लेशयन्त्यातुरांश्चिरम् ।
कुर्यान्न तेषु त्वरया देहाग्निबलवित् क्रियाम् ॥ १८
शमयेत्तान्प्रयोगेण सुखं वा कोष्ठमानयेत् ।
ज्ञात्वा कोष्ठप्रपन्नांश्च यथासन्नं विनिर्हरेत् ॥ १९

॥ सामनिराममललक्षणम् ॥

स्रोतोरोधबलभ्रंशगौरवानिलमूढताः ।
आलस्यापक्तिनिष्ठीवमलसङ्गारुचिक्लमाः ॥ २०
लिङ्गं मलानां सामानां निरामाणां विपर्ययः ।

॥ आमलक्षणम् ॥

ऊष्मणोऽल्पबलत्वेन धातुमाद्यमपाचितम् ॥ २१
*दुष्टमामाशयगतं रसमामं प्रचक्षते ।

॥ मतान्तरेण आमलक्षणम् ॥

अन्ये दोषेभ्य एवातिदुष्टेभ्योऽन्योन्यमूर्च्छनात् ॥ २२
कोद्रवेभ्यो विषस्येव वदन्त्यामस्य संभवम् ।

॥ सामा दोषा दूष्याश्च ॥

आमेन तेन संपृक्ता दोषा दूष्याश्च दूषिताः ॥ २३
सामा इत्युपदिश्यन्ते ये च रोगास्तदुद्भवाः ।

---

*इदमारभ्य प्रकृतमातृकायामविद्यमानं मातृकान्तरे विद्यमानं च अनुस्यूतं च लिख्यते योग्यमित्यवन्तम् ।

॥ सामदोषचिकित्सायुक्तिः ॥

सर्वदेहप्रविसृतान् सामान्दोषान्न निर्हरेत् ॥ २४

लीनान्धातुष्वनुत्क्लिष्टान् फलादामाद्रसानिव ।
आश्रयस्य हि नाशाय ते स्युर्दुर्निर्हरत्वतः ॥ २५

पाचनैर्दीपनैः स्नेहैस्तान् स्वेदैश्च परिष्कृतान् ।
शोधयेच्छोधनैः काले यथासन्नं यथाबलम् ॥ २६

॥ यथासन्नमार्गः ॥

हन्त्याशु युक्तं वक्त्रेण द्रव्यमामाशयान्मलान् ।
घ्राणेन चोर्ध्वजत्रूत्थान् पक्वाधानां[1] द्गुदेन तु ॥ २७

॥ अविधार्या दोषाः ॥

उत्क्लिष्टानध ऊर्ध्वं वा न चामान्वहतः स्वयम् ।
धारयेदौषधैर्दोषान् विधृतास्ते हि रोगदाः ॥ २८

॥ तत्रोपक्रमविधिः ॥

प्रवृत्तान्प्रागतो दोषानुपेक्षेत हिताशनः ।
विबद्धान्पाचनैस्तैस्तैः पाचयेन्निर्हरेत्तथा ॥ २९

॥ स्वस्थस्य दोषनिर्हरणकालनिरूपणम् ॥

श्रावणे कार्तिके चैत्रे मासि साधारणे क्रमात् ।
ग्रीष्मवर्षाहिमचितान् वाय्वादीनाशु निर्हरेत् ॥ ३०

अत्युष्णवर्षशीता हि ग्रीष्मवर्षाहिमागमाः ।
सन्धौ साधारणे तेषां दुष्टान् दोषान् विनिर्हरेत् ॥

स्वस्थवृत्तमभिप्रेत्य

॥ व्याधौ व्याधिवशेन निर्हरणविधिः ॥

व्याधौ व्याधिवशेन तु ॥ ३१

---

1. गुदेन.

कृत्वा शीतोष्णवृष्टीनां प्रतीकारं यथायथम् ।
प्रयोजयेत्क्रियां प्राप्तां क्रियाकालं न हापयेत् ॥ ३२

॥ दशौषधकालाः ॥

युञ्ज्यादनन्नमन्नादौ मध्येऽन्ते कवलान्तरे ।
ग्रासे ग्रासे मुहुस्सान्नं सामुद्गं निशि चौषधम् ॥ ३३

॥ तेषां विषयाः ॥

कफोद्रेके गदेऽनन्नं बलिनो रोगरोगिणोः ।
अन्नादौ विगुणेऽपाने समाने मध्य इष्यते । ३४
व्यानेऽन्ते प्रातराशस्य सायमाशस्य तूत्तरे ।
ग्रासग्रासान्तयोः प्राणे प्रदुष्टे मातरिश्वनि ॥ ३५
मुहुर्मुहुर्विषच्छर्दिहिध्मातृट्श्वासकासिषु ।
योज्यं सभोज्यं भैषज्यं भोज्यैश्चित्रैररोचके ॥ ३६
कम्पाक्षेपकहिध्मासु सामुद्गं [1]लघु भोजिनाम् ।
ऊर्ध्वजत्रुविकारेषु स्वप्नकाले प्रशस्यते ॥ ३७

इति श्रीश्रीनिवासपण्डितविरचिते चिकित्सातिलके सूत्रस्थाने दोषोपक्रमणीयं नामैकादशोऽध्यायः ॥

---

1. विधि भोजनम्.

## ॥ अथ द्वितीयोऽध्यायः ॥

### ॥ अथ दिनचर्या ॥

॥ अथातो दिनचर्याध्यायं व्याख्यास्यामः ॥

॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥

ब्राह्मे मुहूर्ते चोत्थाय ध्यायेद्देवमधोक्षजम् ।
कृतशौचादिकर्माऽथ दन्तधावनमाचरेत् ॥ १

### ॥ दन्तधावनविधिः ॥

अर्कन्यग्रोधखदिरकरञ्जककुभादिकैः ।
प्रातर्भुक्त्वा च मृद्वग्रैः कषायकटुतिक्तकैः ॥ २
कनीन्यग्रसमस्थूलैः प्रगुणैर्द्वादशाङ्गुलैः ।
प्रातर्भुक्त्वा च मृद्वग्रैः कषायकटुतिक्तकैः ॥ ३
भक्षयेद्दन्तपवनं दन्तमांसान्यबाधयन् ।
जिह्वानिर्लेखनं कुर्यात् ततस्सन्ध्यादिसत्क्रियाः ॥ ४

### ॥ दन्तधावननिषेधः ॥

नाद्यादजीर्णी वमथुश्वासकासज्वरार्दिती ।
तृष्णाऽऽस्यपाकहृन्नेत्रशिरःकर्णामयी च तत् ॥ ५

### ॥ सौवीराञ्जनगुणाः ॥

सौवीरमञ्जनं नित्यं हितमक्ष्णोस्ततो भजेत् ।
लोचने तेन भवतः सुस्निग्धघनपक्ष्मणी ॥ ६
व्यक्तत्रिवर्णे विमले मनोज्ञे सूक्ष्मदर्शने ।

### ॥ रसाञ्जनविधिः ॥

चक्षुस्तेजोमयं तस्य विशेषाच्छ्लेष्मतो भयम् ॥ ७
योजयेत्सप्तरात्रेऽस्मात् स्रावणार्थं रसाञ्जनम् ।

॥ नस्यादिविधिः ॥

ततो नावनगण्डूषधूमताम्बूलभाग्भवेत् ॥ ८

॥ ताम्बूलानर्हाः ॥

ताम्बूलं क्षतपित्तास्ररूक्षो[1]त्कुपितचक्षुषाम् ।
विषमूर्च्छामदार्तानामपथ्यं शोषिणामपि ॥ ९

॥ अभ्यङ्गविधिः ॥

अभ्यङ्गमाचरेन्नित्यं स जरा[2]श्रमवातहा ।
दृष्टिप्रसादपुष्ट्यायुःस्वप्न[3]सुत्वक्त्वदार्ढ्यकृत् ॥ १०
शिरःश्रवणपादेषु तं विशेषेण शीलयेत् ।

॥ अभ्यङ्गवर्ज्याः ॥

वर्ज्योऽभ्यङ्गः कफग्रस्तकृतसंशुद्ध्यजीर्णिभिः ॥ ११

॥ व्यायामविधिः ॥

लाघवं कर्मसामर्थ्यं दीप्तोऽग्निर्मेदसः क्षयः ।
विभक्तघनगात्रत्वं व्यायामादुपजायते ॥ १२

॥ व्यायामवर्ज्याः ॥

वातपित्तामयी बालो वृद्धोऽजीर्णी च तं त्यजेत् ।

॥ व्यायामनियमाः ॥

अर्धशक्त्या निषेव्यस्तु बलिभिस्स्निग्धभोजिभिः ॥ १३
शीतकाले वसन्ते च मन्दमेव ततोऽन्यदा ।
तं कृत्वा सुसुखं देहं मर्दयेत समन्ततः ॥ १४

---

1 कम्पित 2 श्रम 3 सुत्वच

॥ अतिव्यायामदोषः ॥

तृष्णा क्षयः प्रतमको रक्तपित्तं श्रमः क्लमः ।
अतिव्यायामतः कासो ज्वरश्छर्दिश्च जायते ॥ १५

॥ उद्वर्तनगुणाः ॥

उद्वर्तनं कफहरं मेदसः प्रविलायनम् ।
स्थिरीकरणमङ्गानां त्वक्प्रसादकरं परम् ॥ १६

॥ स्नानगुणाः ॥

दीपनं वृष्यमायुष्यं स्नानमूर्जाबलप्रदम् ।
कण्डूमलश्रमस्वेदतन्द्रातृड्दाहपाप्मजित् ॥ १७

॥ उष्णाम्बुपरिषेकविधिः ॥

उष्णाम्बुनाधःकायस्य परिषेको बलावहः ।
तेनैव तूत्तमाङ्गस्य बलहृत्केशचक्षुषाम् ॥ १८

॥ स्नानानर्हाः ॥

स्नानमर्दितनेत्रास्यकर्णरोगातिसारिषु ।
आध्मानपीनसाजीर्णभुक्तवत्सु च गर्हितम् ॥ १९

॥ भोजनादिविधिः ॥

आहारशयनाब्रह्मचर्यैर्युक्त्या निषेवितैः ।
शरीरं धार्यते नित्यमगारमिव धारणैः ॥ २०
जीर्णे हितमितं भुक्त्वा यावदन्नं प्रतिष्ठितम् ।
ततः शतपदं गत्वा वामपार्श्वेन संविशेत् ॥ २१
तेन द्वात्रिंशतं मात्रा दक्षिणे पञ्चविंशतिम् ।
शयीत द्वादशाधस्तान्न दिवोत्तरभोजिनः ॥ २२
न वेगितोऽन्यकारी स्यान्नाजित्वा साध्यमामयम् ।

॥ रात्रिजागरादिगुणाः ॥

रात्रौ जागरणं रूक्षं स्निग्धं प्रस्वपनं दिवा ॥ २३
अरूक्षमनभिष्यन्दि चासीनप्रचलायितम् ।

॥ ग्रीष्मे दिवास्वप्नविधिः ॥

ग्रीष्मे वायुचयादानरौक्ष्यरात्र्यल्पभावतः ॥ २४
दिवास्वप्नो हितः

॥ दिवास्वप्नदोषस्तदपवादश्च ॥

अन्यस्मिन् कफपित्तकरो हि सः ।
मुक्त्वातिभाष्ययानाध्वमद्यस्त्रीभारकर्मभिः ॥ २५
क्रोधशोकभयैः क्लान्तान् श्वासहिध्मातिसारिणः ।
वृद्धबालाबलक्षीणक्षततृट्शूलपीडितान् ॥ २६
अजीर्णाभिहतोन्मत्तान् दिवास्वप्नोचितानपि ।
धातुसाम्यं तथा ह्येषां श्लेष्मा चाङ्गानि पुष्यति ॥ २७

॥ ग्रीष्मेऽपि दिवास्वप्नानर्हाः ॥

बहुमेदःकफाः स्वप्युः स्नेहनित्याश्च नाहनि ।

॥ रात्रिनिद्रापि वर्ज्याः ॥

विषार्तः कण्ठरोगी च नैव जातु निशास्वपि ॥ २८

॥ अकालशयनदोषाः ॥

अकालशयनान्मोहज्वरस्तैमित्यपीनसाः ।
शिरोरुक्कासहृल्लाससोतोरोधाग्निमन्दताः ॥ २९

॥ अकालातिनिद्राचिकित्सा ॥

तत्रोपवासवमनस्वेदनावनमौषधम् ।
योजयेदतिनिद्रायां तीक्ष्णं प्रच्छर्दनाञ्जनम् ॥ ३०
नावनं लङ्घनं चिन्तां व्यवायं शोकभीक्रुधः ।

॥ निद्रानाशनयोगाः ॥

मधुयष्टी तथा मुस्ता सैन्धवं बृहतीफलम् ॥ ३१

निद्रां निहन्ति नस्येन महतीमतिवेगतः ।

मरिचं लाल्याभ्यज्य मधुना हन्ति लेपतः ॥ ३२

एभिरेव च निद्राया नाशः श्लेष्मातिसंक्षयात् ।

॥ निद्रानाशजा विकाराः ॥

निद्रानाशादङ्गमर्दगौरवालस्यजृम्भिताः ॥ ३३

जाड्यं ग्लानिर्भ्रमोऽपक्तिस्तन्द्रा रोगाश्च वातजाः ।

॥ रात्रौ निद्राविधिः ॥

यथाकालमतो निद्रां रात्रौ सेवेत सात्म्यतः ॥ ३४

॥ रात्रिजागरे दिवास्वापनियमः ॥

असात्म्यजागरादर्धं प्रातः स्वप्यादभुक्तवान् ।

॥ मन्दनिद्रचिकित्सा ॥

शीलयेन्मन्दनिद्रस्तु क्षीरमिक्षुरसं दधि ॥ ३५

अभ्यङ्गोद्वर्तनस्नानमूर्धकर्णाक्षितर्पणम् ।

॥ मधूकपुष्पादिप्रयोगः ॥

मधूकपुष्पं मधुकं कुशाः क्षीरी सशर्करा ॥ ३६

सिद्धात्पयोऽनुपानं स्याद् गाढं निद्रा प्रवर्तते ।

॥ पिप्पलमूलप्रयोगः ॥

गुडे पिप्पलमूलस्य चूर्णानालोड्य तल्लिहन् ॥ ३७

चिरादपि च तां नष्टां निद्रामाप्नोति मानवः ।

॥ मस्तुमर्दनम् ॥

मस्तुना पादतलकौ मर्दयेन्निद्रयार्थिनाम् । ३८

॥ सिंह्यादियोगः ॥

सिंही व्याघ्री सिंहमुखी काकमाची पुनर्नवा ।
वार्ताकार्जुनमूलानां [1]योगो निद्राकरो नृणाम् ॥ ३९

॥ काकजङ्घादिक्वाथः ॥

काकजङ्घा त्वपामार्गकोकिलाक्षसुवर्णकाः ।
क्वाथो निद्राकरः [2]शीघ्रमूलं [3]वा व्यधयेत्सिराम् ॥ ४०

॥ अञ्जनयोगौ ॥

कृष्णाष्टमीनिशायां पङ्कजमूलात्तमृत्तिकाकन्दम् ।
तमसि सुसूक्ष्मं पिष्टं निद्रां करोति नेत्राञ्जनतया ॥ ४१
कतकफलं द्राक्कुरुते तमसि सुपिष्टाञ्जितं निद्राम् ।

॥ उपोदकाशिखाधारणं ॥

उपोदका शिखाबद्धा निद्रां संजनयेद्भृशम् ।

॥ निद्राकरविहाराहारौ ॥

कान्ताबाहुलताश्लेषो निर्वृतिः कृतकृत्यता ॥ ४२
मनोऽनुकूला विषयाः कामं निद्रासुखप्रदाः ।
शर्करामाक्षिकघृतक्षीरैः स्यान्निशि भोजनम् ॥ ४३

॥ रात्रौ क्षीरपानविधिः ॥

विदाहीन्यन्नपानानि यतो भुङ्क्ते हि मानवः ।
तद्विदाहप्रशान्त्यर्थं रात्रौ क्षीरं प्रशस्यते । ४४

॥ क्षीरभुक्ते ताम्बूलनिषेधः ॥

ताम्बूलं नैव सेवेत क्षीरभुक्तो हि मानवः ॥
[4]यावता जीर्यति क्षीरं तावदेव विनिर्णयः ॥ ४५

---

1 रोगो 2 सीघ्रं वक्षीरं 3 व्याघावयेच्छिरास् 4 यावद्वाप्नयते

॥ रात्रेर्निद्राकरत्वे युक्तयः ॥

संसर्गाद्वा प्रभावाद्वा तमोमूला तमोमयी ।
बाहुल्यात्तमसो रात्रौ निद्रा प्रायेण जायते ॥ ४६

॥ मैथुनवर्ज्याः ॥

अत्याशितोऽधृतिः क्षुद्वान् दुस्थिताङ्गः पिपासितः ।
बालो वृद्धोऽन्यवेगार्तस्त्यजेद्रोगी च मैथुनम् ॥ ४७

॥ ऋतुभेदेन मैथुनव्यवस्था ॥

सेवेत कामतः कामं तृप्तो वाजीकृता हिमे ।
त्र्यहाद्वसन्तशरदोः पक्षाद्वृष्टिनिदाघयोः ॥ ४८

॥ मैथुनमिथ्यायोगदोषाः ॥

श्रमक्लमोरुदौर्बल्यबलधात्विन्द्रियक्षयः ।
[1]अपर्वमरणं च स्यादन्यथा गच्छतः स्त्रियम् ॥ ४९

॥ विहितमैथुने गुणाः ॥

स्मृतिमेधायुरारोग्यपुष्टीन्द्रिययशोबलैः ।
अधिका मन्द[2]जरसो भवन्ति स्त्रीषु संयुताः ॥ ५०

॥ मैथुनावसाने सेव्याः ॥

स्नानानुलेपनहिमानिलखण्डखाद्य-
शीताम्बुदुग्धरसयूषसुराप्रसन्नाः ।
सेवेत चानुशयनं विरतौ रतस्य
तस्यैवमाशु वपुषो वय एति धाम्ना ॥ ५१

॥ धर्मपरत्वविधिः ॥

सुखार्थास्सर्वभूतानां मतास्सर्वाः प्रवृत्तयः ।
सुखं च न विना धर्मात्तस्माद्धर्मपरो भवेत् ॥ ५२

इति श्रीश्रीनिवासपण्डितविरचितचिकित्सातिलके सूत्रस्थाने
॥ दिनचर्या नाम द्वादशोऽध्यायः ॥

---

1. अपक्व 2. रजसो

## ॥ अथ त्रयोदशोऽध्यायः ॥

अथात ऋतुचर्याध्यायं व्याख्यास्यामः ॥

इति ह स्माहुरात्रेयादयो महर्षयः ॥

### ॥ ऋतुसंख्यानम् ॥

मासैर्द्विसंख्यैर्माघाद्यैः क्रमात् षड् ऋतवः स्मृताः ।

### ॥ उत्तरायणदक्षिणायने तत्र रसप्रभावश्च ॥

शिशिराद्यैस्त्रिभिस्तैस्तु विद्यादयनमुत्तरम् ॥ १

तिक्तः कषायः कटुको बलिनोऽत्र रसाः क्रमात् ।

वर्षादिकैस्तु ऋतुभिस्त्रिभिस्स्याद्दक्षिणायनम् ॥ २

स्निग्धा[1]श्चेहाम्ललवणमधुरा बलिनो रसाः ।

### ॥ ऋतुषु बलस्थितिः ॥

शीतेऽग्र्यं वृष्टिघर्मेऽल्पं बलं मध्यं तु शेषयोः ॥ ३

### हेमन्तचर्या ॥

बलिनश्शीतसंरोधाद्धेमन्ते प्रबलोऽनलः ।

भवत्यल्पेन्धनो धातून् स पचेद्वायुनेरितः ॥ ४

अतो हिमेऽस्मिन् सेवेत स्वाद्वम्ललवणान्रसान् ।

दैर्घ्यान्निशानामेतर्हि प्रातरेव बुभुक्षितः ॥ ५

अवश्यकार्यं संपाद्य यथोक्तं शीलयेदनु ।

वातघ्नतैलैरभ्यङ्गं मूर्धतैलं विमर्दनम् ॥ ६

नियुद्धं कुशलैः सार्धं पादाघातं च युक्तितः

कषायापहृतस्नेहस्ततः स्नातो यथाविधि ।

कुङ्कुमेन सदर्पेण प्रदिग्धोऽगरुधूपितः ॥ ७

---

1. स्नेहा

गोधूमपिष्टमाषेक्षुक्षीरोत्थविकृतीः शुभाः ।
नवमन्नं वसां तैलं शौचकार्ये सुखोदकम् ॥ ८
प्रावाराद्यैश्च शयनमुष्णैराबृतवान्[1] भजेत् ।
पीवरोरुस्तनश्रोण्यः प्रमदाः समदाः प्रियाः ॥ ९
हरन्ति शीतमुष्णाङ्ग्यो धूपकुङ्कुमयौवनैः ।
अङ्गारतापसन्तप्तगर्भभूवेश्मचारिणः ॥ १०
शीतपारुष्यजनितो न दोषो जातु जायते ।

॥ शिशिरे हेमन्तचर्यातिदेशो विशेषतः ॥

अयमेव विधिः कार्यः शिशिरे च विशेषतः ॥ ११
उत्तरायणजं रौक्ष्यं तदा ह्यधिकशीतकम् ।

॥ वसन्तचर्या ॥

कफश्चितो हि शिशिरे वसन्तेऽर्कांशुतापितः ॥ १२
हत्वाऽग्निं कुरुते रोगानतस्तं त्वरया जयेत् ।
तीक्ष्णैर्वमननस्याद्यैर्लघुरूक्षैश्च भोजनैः ॥ १३
व्यायामोद्वर्तनाघातैर्जित्वा श्लेष्माणमुल्वणम् ।
स्नातोऽनुलिप्तः कर्पूरचन्दनागरुकुङ्कुमैः ॥ १४
पुराणयवगोधूमक्षौद्रजाङ्गलशूल्यभुक् ।
दक्षिणानिलशीतेषु परितो जलवाहिषु ॥ १५
विचित्रपुष्पवृक्षेषु काननेषु सुगन्धिषु ।
गोष्ठीकथाभिश्चित्राभिर्मध्याह्नं गमयेत्सुखी ॥ १६

॥ वसन्ते वर्ज्यानि ॥

गुरुशीतदिवास्वप्नस्निग्धाम्लमधुरं त्यजेत् ।

---

1. भवेत्.

॥ ग्रीष्मचर्या ॥

तीक्ष्णांशुरतितीक्ष्णांशुर्ग्रीष्मे संक्षिपतीव यत् ॥ १७
प्रत्यहं क्षीयते श्लेष्मा तेन वायुश्च वर्धते ।
अतोऽस्मिन्पटुकट्वम्लव्यायामार्ककरांस्त्यजेत् ॥ १८
भजेन्मधुरमेवान्नं लघु स्निग्धं हिमं द्रवम् ।
सुशीततोयसिक्ताङ्गो लिह्यात्सक्तून्सशर्करान् ।
कुन्देन्दुधवलं शालिमश्नीयाज्जाङ्गलैः [1]पलैः ॥ १९
पानकं [2]पञ्चसारं वा रसालां रागषाडवौ ।
पिबेत्कर्पूरसंयुक्तौ पाटलादिसुवासितौ ॥ २०
[3]शशाङ्ककिरणान् भक्ष्यान् रजन्यां भक्षयन्पिबेत् ।
ससितं माहिषं क्षीरं चन्द्रनक्षत्रशीतलम् ॥ २१
कदलीदलकल्हारमृणालकमलोत्पलैः ।
कोमलैः कल्पिते तल्पे हसत्कुसुमपल्लवे ॥ २२
मध्यन्दिनेऽर्कतापार्तः स्वप्याद्धारागृहेऽथ वा ।

॥ वर्षर्तुचर्या ॥

अयने चोत्तरे ग्लानपुंसामग्निर्हि सीदति ॥ २३
वर्षासु दोषैर्दुष्यन्ति तेऽम्बुलम्बाम्बुदेऽम्बरे ।
सतुषारेण मरुता सहसा शीतलेन च ॥ २४
भूबाष्पेणाम्लपाकेन मलिनेन च वारिणा ।

---

1. फलैः

2. द्राक्षामधूकखर्जूरकाश्मर्यैः सपरूषकैः । तुल्यांशैः कल्पितं पूतं शीतं कर्पूरवासितम् ; पानकं पञ्चसाराख्यं दाहतृष्णानिवर्तकम् ॥ इति "खजेन मथितां पाद्यशर्करां दधिसंयुताम् । शुण्ठीजीरकसिन्धूत्थै रसालां मर्जितां विदुः ॥" इति ; द्राक्षाक्वाथः शालिसक्तूपपन्नः क्षौद्रप्रायः शर्करावांशिमिश्रः । गोक्षांशाढ्यः सन्निपातः सधान्यो रागो ज्ञेयः षाडवो दाडिमाढ्यः" इति च पञ्चसारपानक रसाला रागषाडव लक्षणानि यथाऽत्रैवाग्रस्वरूपविज्ञानीये वक्ष्यमाणलक्षणानि ॥

3. प्रक्षिप्य शर्करां क्षीरे पक्वेऽतिघनतां गते । निर्वर्तिता ये भक्ष्यास्ते शशाङ्ककिरणा मताः ॥

वह्निनैव च मन्देन तेष्वित्यन्योन्यदूषिषु ॥ २५
भजेत्साधारणं सर्वमूष्मणस्तेजनं च यत् ।
आस्थापनं शुद्धतनुर्जीर्णं धान्यं रसान् कृतान् ॥ २६
मस्तु सौवर्चलाढ्यं वा पञ्चकोलावचूर्णितम् ।
दिव्यं कौपं शृतं चाम्भो भोजनं त्वतिदुर्दिने ॥ २७
व्यक्ताम्ललवणस्नेहं संशुष्कं क्षौद्रवल्लघु ।
हर्म्यपृष्ठे वसेद्बाष्पशीतशीकरवर्जिते ॥ २८

॥ वर्षासु वर्ज्याः ॥

नदीजलोदमन्थाहःस्वप्नायासातपांस्त्यजेत् ।

॥ शरच्चर्या ॥

वर्षाशीतोचिताङ्गानां सहसैवार्करश्मिभिः ॥ २९
तप्तानां सञ्चितं वृष्टौ पित्तं शरदि कुप्यति ।
तज्जयाय घृतं तिक्तं विरेको रक्तमोक्षणम् ॥ ३०
तिक्तं स्वादु कषायं च क्षुधितोऽन्नं भजेल्लघु ।
[1]शालिमुद्गसिताधात्रीपटोलमधुजाङ्गलम् ॥ ३१
तप्तं तप्तांशुकिरणैः शीतं शीतांशुरश्मिभिः ।
समन्तादप्यहोरात्रमगस्त्योदयनिर्विषम् ॥ ३२
शुचि हंसोदकं नाम निर्मलं मलजिज्जलम् ।
चन्दनोशीरकर्पूरमुक्तास्रग्वसनोज्ज्वलः ॥ ३३

॥ शरदि वर्ज्याः ॥

तुषारक्षारसौहित्यदधितैलवसाऽऽतपान् ।
तीक्ष्णमद्यदिवास्वप्नपुरोवातान् परित्यजेत् ॥ ३४

॥ ऋतुचर्यायां रससङ्ग्रहः ॥

शीते वर्षासु चाद्यांस्त्रीन् वसन्तेऽन्त्यान् रसान् भजेत् ।
स्वादुं निदाघे शरदि स्वादुतिक्तकषायकान् ॥ ३५

1 स्वादु

॥ तत्रैव रूक्षादिगुणसङ्ग्रहः ॥

शरद्वसन्तयो रूक्षं शीतं घर्मघनान्तयोः ।
अन्नपानं समासेन विपरीतमतोऽन्यदा ॥
नित्यं सर्वरसाभ्यासः स्वस्वाधिक्यमृतावृतौ ॥ ३६

॥ ऋतुसन्धिस्तत्र चर्या च ॥

ऋत्वोरन्तादिसप्ताहावृतुसन्धिरिति स्मृतः ।
तत्र पूर्वो विधिस्त्याज्यः सेवनीयोऽपरः क्रमात् ॥ ३७
असात्म्यजा हि रोगास्स्युः सहसा त्यागशीलनात् ।

*॥ अथ परिशिष्टप्रकरणम् ॥

॥ ताम्बूलवर्गः ॥

॥ पूगगुणाः ॥

कषायमीषन्मधुरं रूक्षं रुच्यं सरं लघु ।
वातलं पाकि तीक्ष्णोष्णं वक्त्रक्लेदामयापहम् । १
सौगन्ध्यकारकं हृद्यं दीपनं कसुकीफलम् ।
कषायं वातलं रूक्षं स्वादु पूगं विरेचनम् ॥ २
कफपित्तविकारघ्नं मुखसौभाग्यकारकम् ।

॥ अवस्थाऽऽदिभेदेन पूगगुणाः ॥

स्विन्नं पूगं त्रिदोषघ्नमपक्वं दोषलं स्मृतम् ॥ ३
तरुणं मेध्यचक्षुष्यं मदपाण्ड्वामयप्रदम् ।
मूर्छाम्लानिहरं रुच्यं वृष्यं [1]वृद्धमतोऽन्यथा ॥ ४
नातिबालं नातिवृद्धं स्विन्नं योग्यं तु सर्वदा ।
न भजेद्वत्सरातीतं नैव दग्धमशोधितम् ॥ ५

---

*अस्मिन् परिशिष्टप्रकरणे ताम्बूलादयो निर्दिष्टचरा अपि भूयो गुणा विशेषप्रतिपादनाय प्रस्तूयन्ते ॥

1. मध्यं वृत्त

॥ पूगशोधनकल्पनविधिः ॥

तरुणानि सवल्कानि पक्वपूगीफलानि तु ।
कृत्वा त्वचा वियुक्तानि छायायां शोषितानि च ॥ ६
नवानि तानि मधुरप्रायाण्याहृत्य खण्डयेत् ।
भङ्गे तु पटलान् खण्डान् घनानुष्णाम्बुशोधितान् ॥ ७
आतपे शोषितान्सम्यग् घर्षितांश्च प्रकल्पयेत् ।
खण्डितं घर्षितं लिप्तं शशिकस्तूरिकादिभिः ॥ ८
वासितं विविधैः पुष्पैः पूगं शोधितमुत्तमम् ।

॥ पूगभेदाः ॥

गिरिजं वनजं चैवमानूपञ्जाङ्गलं तथा ॥ ९
पूगं चतुर्विधं ज्ञेयं जाङ्गलं चोत्तमं विदुः ।
दीपनं रोचनं वल्यं तद्धि स्वादु कषायकम् ॥ १०
तृष्णादाहहरं वृष्यं [1]चिक्कणं क्रमुकीफलम् ।

॥ नागवल्लीदळगुणाः ॥

सतिक्तं कटुकं रूक्षं स्वादूष्णं रुचिकारकम् ॥ ११
कफवातहरं वृष्यं नागवल्लीदळं शिवम् ।
सक्षारं कटु दीपनं रुचिकरं सौभाग्यसम्पत्करं
वर्ण्यं भूतिविवर्धनं विषहरं वक्त्रामयध्वंसनम् ।
[2]कामोद्दीपनकृत्सुगन्धि विशदं कर्पूरवल्लीदळं
पथ्यं वातकफापहं सुकृतिभिर्भूपैस्सदा सेव्यते ॥ १२

॥ चूर्णसामान्यगुणाः ॥

तीक्ष्णोष्णं कटुकं रूक्षं [3]सूक्ष्मं वर्णकरं सरम् ।
चूर्णं शङ्खाश्मशम्बूकशुक्तिमौक्तिकजं स्मृतम् ॥ १३

---

1. चिक्कणं  2. कामं दीपन  3 रूक्षं चूर्णं

॥ अश्मचूर्णगुणाः ॥

अत्यन्ततीक्ष्णं कटुकं चूर्णमश्मभवं लघु ।
पित्तप्रकोपनं रूक्षं विशेषाच्छ्लेष्मनाशनम् ॥ १४

॥ शम्बूकचूर्णगुणाः ॥

चूर्णं शम्बूकजं भेदि रूक्षोष्णं श्लेष्मनाशनम् ।

मुक्ताचूर्णगुणाः ॥

मुक्ताफलोद्भवं चूर्णं वातलं पित्तशूलजित् ॥ १५
विशेषात्पित्तभूयिष्ठान् जयेत्कुक्षिगतान् गदान् ॥

ताम्बूललक्षणम् ॥

ताम्बूलवल्लीछदनानि सम्य-
ग्विशोधितानि क्रमुकीफलानि ।
चूर्णं च शुद्धं मिळितं प्रशस्तं
ताम्बूलमित्येतदुदाहरन्ति ॥ १६

॥ ताम्बूलगुणाः ॥

ताम्बूलं कटु तिक्तमुष्णमधुरं क्षारं कषायान्वितं
वातघ्नं कृमिनाशनं कफहरं कायाग्निसन्दीपनम् ।
स्त्रीसम्भाषणभूषणं रतिकरं [1]शोकस्य विच्छेदनं
ताम्बूले विहितास्त्रयोदश गुणाः स्वर्गेऽप्यमी दुर्लभाः ॥ १७
कामं प्रदीपयति रूपमभिव्यनक्ति
सौभाग्यमावहति वक्त्रसुगन्धितां च ।
ऊर्जां करोति कफजांश्च निहन्ति रोगां-
स्ताम्बूलमेवमपरांश्च गुणान् करोति ॥ १८

---

1. शोकं च

॥ ताम्बूलप्रमाणम् ॥

पूगस्यार्धपलं चूर्णं सार्धनिष्कं [1]पलत्रयम् ।
नागवल्लीदळानां च प्रमाणमिदमुत्तमम् ॥ १९

॥ प्रमाणातिक्रमे दोषादि ॥

पाण्डुता वक्त्रशोषश्च स्यात् पूगस्य फलेऽधिके ।
चूर्णाधिक्ये तु दौर्गन्ध्यं पत्राधिक्ये सुगन्धिता ॥ २०

॥ ताम्बूलभक्षणक्रमः ॥

चर्विते चर्विते पत्रे चूर्णस्य गुळिकां क्षिपेत् ।

॥ भोजनान्ते ताम्बूलप्रशंसा ॥

प्राग्जीवं भोजनाद्याच्छ्लेष्मकाले विशिष्यते ॥ २१
आदौ विषोपमं पीतं [2]मध्ये मेदि सुदुर्जरम् ।
पश्चात्सुधोपमं विद्याद्रसं ताम्बूलचर्वणे ॥ २२

अग्रादिवर्जनविधिः ॥

अग्रतश्श्रीर्यशो मूले मध्ये विष्णुः प्रतिष्ठितः ।
तस्मादग्रं च मूलं च मध्यं च परिवर्जयेत् ॥ २३
पर्णाग्रं पर्णपृष्ठं च चूर्णपर्णं द्विपर्णकम् ।
दन्तधावनपर्णं च शक्रस्यापि श्रियं हरेत् ॥ २४
पर्णमूले भवेद्व्याधिः पर्णाग्रे पापसम्भवः ।
चूर्णपर्णं हरत्यायुः सिरा बुद्धिविनाशिनी ॥ २५

॥ कालभेदेन प्रमाणव्यवस्था ॥

पूगाधिकं तु पूर्वाह्णे मध्याह्ने चूर्णसंयुतम् ।
रात्रौ तु पत्रबहुलं ताम्बूलं भक्षयेद् बुधः ॥ २६

---

1. फल 2. विशेषतः 3. द्वितीयं

ताम्बूलं प्रातरासेव्यं प्राग्भक्तं सप्तशः क्रमात् ।
भोजनानन्तरं सेव्यं पञ्चशो द्वित्रिशो निशि ॥ २७

॥ ताम्बूलातियोगदोषाः ॥

पाण्डुत्वम्दन्तदौर्बल्यमक्षिरोगं बलक्षयम् ।
[1]जायन्ते मुखरोगाश्च ताम्बूलस्यातिसेवनात् ॥ २८

॥ ताम्बूलकालाः ॥

प्रातस्सुप्तोत्थिते [2]याते स्नाते भुक्ते रतोद्यते ।
पथ्यं विशेषात्ताम्बूलं सभामध्यगतेऽपि च ॥ २९

॥ ताम्बूलवर्ज्याः ॥

ताम्बूलं नैव सेवेत सुविरिक्तो बुभुक्षितः ।
रक्तपित्तक्षतक्षीणो रूक्षोत्कुपितलोचनः ॥ ३०
ज्वरी पिपासी [3]रूक्षश्च मत्तोऽध्वश्रमपीडितः ।
विषमूर्छोपवासार्तो मेही पाण्ड्वामयी क्षयी ॥ ३१
हिध्मावान् मूत्रकृछ्री च हृद्रोगी श्वासकासवान् ।
अतीसार[4]ग्रहण्यार्तो भूतापस्मारदूषितः ॥ ३२

॥ क्षीरं पीत्वा ताम्बूलसेवाप्रतिषेधः ॥

ताम्बूलं नैव सेवेत क्षीरं पीत्वा हि मानवः ।
यावदास्वाद्यते क्षीरं तावदेवेति निर्णयः ॥ ३३

॥ तत्र दोषाः ॥

क्षीरं पीत्वा मुहूर्ते हि ताम्बूलं यदि चर्वते ।
प्रमेही मूत्रकृच्छ्री वा त्वग्दोषी वा भवेन्नरः ॥ ३४

---

1. करोति मुखरोगांश्च 2. वाते
3. श्वा नीच 4. गृहिण्यार्तो

॥ कल्कप्रतिषेधः ॥

तत्कल्कसेवनं रूक्षमरुच्यं वह्निनाशनम् ।
अवृष्यं पीनसश्वासपाण्डुकृच्छ्रमेहकृत् ॥ ३५

॥ ताम्बूलदानप्रशंसा ॥

त्रयोऽप्यत्र [1]सुराधीशा ब्रह्मविष्णुमहेश्वराः ।
ताम्बूलदानात्तुष्यन्ति तस्मात्तद्दानमुत्तमम् ॥ ३६

॥ खदिरसारगुणाः ॥

खदिरतरुजसारं सेवितं सर्वदोष-
क्रिमिजठररुजास्रक्कुष्ठगुल्मोदरघ्नम् ।
हरति दशनजातान् वक्त्रजांश्चापि रोगा-
नरुचिमनलमान्द्यं स्थौल्यमेदोगदांश्च ॥ ३७

॥ खादिरादिगुलिका ॥

खादिरक्वाथचूर्णं तु कस्तूरीक्षोदमिश्रितम् ।
श्रीगन्धकल्कसंयुक्तं कर्पूररजसान्वितम् ॥ ३८
मेळयित्वा समैर्भागैर्गुलिका कल्पिता शुभा ।
त्रिदोषशमनी वृष्या दन्तानां च बलावहा ॥ ३९

॥ कर्पूरगुणाः ॥

कर्पूरं कटु तिक्तकं समधुरं शीतं सरं छेदनं
चक्षुष्यं विशदं कफास्रविषजित्तृड्दाहकृच्छ्रप्रणुत् ।
कण्डूतिक्रिमिहृत्क्षतक्षयहरं कान्तिप्रदं श्रीकरं
जिह्वास्तम्भगळग्रहास्यजडतापैच्छिल्यदौर्गन्ध्यजित् ॥ ४०

---

1. 2सुधार्याथाः

[1]दग्धं तथोष्णं कटु तिक्तमुष्णं
वातापहं श्लेष्महरं [2]लघिष्ठम् ।
हेमन्तकाले हितमग्निकारि
कर्पूरमिष्टं नवपीनसेषु ॥ ४१

॥ अमरकर्पूरगुणाः ॥

[3]हिमस्तिक्तः प्रायः कटुकमधुरः पीनसहर-
स्तृषादाहध्वंसी नयनजनितव्याधिशमनः ।
हितोऽसौ पित्तास्रे शरदि च निदाघे न तु हिमे
वरश्छेदी [4]भोगं विरतति रुजाश्चामरशशी ॥ ४२

॥ चीनकर्पूरगुणाः ॥

[5]उष्णः कष्टतरो मदभ्रमकरः श्वेतोऽस्रपित्तापहो
जन्तूत्थोदरशूलजित्पवनहृच्छीनीति नाम्ना शशी ।

॥ कर्पूरगुणाः ॥

कर्पूरं कटु तिक्तकं च मधुरं शीतं सरं छेदनं
चक्षुष्यं विशदं कफास्रविषजित्तृड्दाहकृच्छ्रप्रणुत् ।
कण्डूतिक्रिमिहृत्क्षतक्षयहरं कान्तिप्रदं श्रीकरं
जिह्वास्तम्भगळग्रहास्यजडतापैच्छिल्यदौर्गन्ध्यजित् ॥ ४३

॥ पुष्पद्रवगुणाः ॥

[6]पुष्पद्रवं सुरभि शीतकषायगौरं
दाहश्रमार्तिवमिमोहमुखामहृद्भ्रम् ।
कासार्तिपित्तकफदोषहरं सरं च
सन्तर्पणं च तदरोचकहारकं च ॥ ४४

---

1. शुण्ठैकर्पूरम् भा० 2. लघिष्ठम् 3. पक्वैकर्पूरम् भा०
4. भोगे 5. चीनि भा० 6. पन्नीरगुणम् भा०

॥ श्रीगन्धगुणाः ॥

श्रीगन्ध[1]पिष्टमिह पित्तविदाहतृष्णा-
दाहज्वरप्रशमनं लघु शीतवीर्यम् ।
सुस्वादुतिक्तकटुकं व्रणशुक्रघाति
वृष्यं विसर्पकमदभ्रमनुद्विरूक्षम् ॥ ४५

॥ चन्दनलक्षणम् ॥

छेदेऽरुणं पिष्टपीतं [2]स्वादे तिक्तं सुगन्धिता ।
आलेपने च श्वेतं स्यादेतच्चन्दनलक्षणम् ॥ ४६

॥ चन्दनगुणाः ॥

[3]कान्तं तिक्तरसं कषायकटुकं स्वाद्वन्वितं चन्दनं
वृष्यं कण्ठ्यमसृक्प्रसादनकरं चक्षुष्यमीषद्गुरु ।
तृष्मूर्च्छाप्रदरभ्रमक्लममदासृक्पित्तदाहज्वरा-
द्युन्मादद्विविषाङ्गमर्दपिडकाकण्डूविसर्पापहम् ॥ ४७

॥ चन्दनलेपनव्युत्क्रमे दोषाः ॥

चन्दनेन विहितं विलेपनं
श्लक्ष्णशुष्क[4]घनमाशु दाहकृत् ।

॥ अगरुलेपेऽपि गुणवैपरीत्यम् ॥

[5]तद्वदच्छविरलप्रलेपनं
जायते ह्यगरुणा विदाहनुत् ॥ ४८

---

* "कर्पूरेत्यादि श्लोकत्रयं मातृकायां प्रकरणान्तरस्थमप्यत्र नित्योपयोगि-प्रस्तावाद् ग्रथितम् ॥"

1. मिश्रविष.  2. स्वादे  3. चन्दनगुण्ड भा०
4. घन  5. तत्तदच्छ

॥ अगुरुगुणाः ॥

[1]सुगन्धमगरु स्वेदमेदोदौर्गन्ध्यनाशनम् ।
कटु तिक्तं गुरु स्निग्धमुष्णं वातकफापहम् ॥ ४९

॥ अगरुस्नेहगुणाः ॥

[2]सुगन्धिरगरुस्नेहस्तीक्ष्णोष्णः कटुतिक्तकः ।
रूक्षः पित्तकरो मेदःश्लेष्मानिलविषापहः ॥ ५०

॥ कस्तूरीलक्षणम् ॥

या गन्धैः केतकीनां वहति परिमळं वर्णतः पिङ्गळाभा
स्वादे तिक्ता कटुर्वा लघुरपि तुलने मर्दने [3]चिक्कणा च ।
दग्धा नो भस्म यायच्चिमिचिमिकुरुते चर्मगन्धा दहाग्नौ
सा कस्तूरी विशुद्धा नृपतिसमुचिता कथ्यते गन्धविद्भिः ॥ ५१

॥ देशभेदेन गुणभेदाः ॥

कामरूपे कृष्णवर्णा नेपाळे लोहितप्रभा ।
काश्मीरे कपिलच्छाया कस्तूरी परिकीर्तिता ॥ ५२
कामरूपोद्भवा श्रेष्ठा नेपाळोत्था च मध्यमा ।
काश्मीरदेशसंभूता कस्तूरी त्वधमा [4]मता ॥ ५३

॥ पुनः कस्तूरीगुणाः ॥

कस्तूरी सकषायतिक्तकटुकक्षारा[5]तथोष्णा लघुः
स्निग्धा बद्धमला त्रिदोषशमनी बल्या मृदुर्बृंहणी ।
वातास्रक्क्रिमिशोफशोषवमथुत्वग्दोषवीसर्पजित्
कण्डूकर्कशकार्श्यकोठपिटकाक्षीणेन्द्रियत्वापहा ॥ ५४

मतान्तरं

[6]वर्ण्या धातुविवर्धनी रतिकरी वश्या [7]सुगन्धिः शुभा
स्वेदक्लेदमदश्रमक्लमहरी सौभाग्यसम्पत्करी ।

---

1. अकिळ् भा० 2. चान्दु भा० ३. चिक्कणा
4. धमा 5. लघूष्णा 6. वर्ण्या
7. सुगन्धी

रुच्या बुद्धिमनःप्रसादजननी शुद्धा यशोवर्धनी
वक्त्रामोदविधायिनी विषहरी मान्या दृशो मोहिनी ॥ ५५

॥ कस्तूरीलेप्यान्यङ्गानि ॥

*कस्तूरी स्मरमन्दिरे विनिहिता पादे गले वक्षसि
स्याद् बाह्वे कुचमण्डलेऽपि निटिलोपान्ते कुरङ्गीदृशाम् ।
तद्वत्कक्षकुचाक्षिसन्धिषु पुनस्सौख्यार्थमेवं भजेत्
सौख्यात्सर्वरुजापहा नृपजनैर्नित्यं मुदा सेव्यताम् ॥ ५६

॥ पुनः कस्तूरीगुणाः ॥

कस्तूरी कफवातरक्तशमनी हृद्या सुगन्धिप्रदा
सौभाग्यप्रवरा यशस्करवरा वश्या परा बृंहणी ।
वृष्या कान्तिकरी शुभा सुखकरी लावण्यलक्ष्मीकरी
यक्ष्माशोफतृषापहा श्रमहरी तिक्ता कषाया सरा ॥ ५७

॥ कुङ्कुमगुणाः ॥

पाके स्वादु रसे च तिक्तकटुकं स्निग्धोष्णतीक्ष्णं सरं
वृष्यं हृद्यवमीविषव्रणहरं मेध्यं त्रिदोषापहम् ।
आयुष्यं मदशोषकृच्छ्रकसनत्वग्दृक्छिरोरोगजित्
कामश्रीरतिवर्णकान्तिबलकृत्सौभाग्यदं कुङ्कुमम् ॥ ५८

॥ पुनः कुङ्कुमकुसुमगुणाः ॥

[1]कुङ्कुमकुसुमं तिक्तकटूष्णं
कासवातकफकण्ठरुजाघ्नम् ।

---

* "कस्तूरी स्मरमन्दिरे" इत्यादि श्लोकत्रयं प्रकरणान्तरे मातृकायामुपलब्धमपि कस्तूरीप्रकरणवशादत्र प्रथितम् ॥

1. कुंकुमपू मा०

मूर्ध्नि शूलविषदोषमोचनं
शोभनं च [1]तनुकान्तिकरं च ॥ ५९

॥ गन्धमार्जारवीर्यगुणाः ॥

[2]मार्जाररेतस्तु स्निग्धं शीतं पित्तानिलापहम् ।
विषे विसर्पे वातास्रे शिरोरोगे व्रणे हितम् ॥ ६०
सुगन्धिकान्तिहृद्धृस्यं श्रीसौभाग्यबलप्रदम् ।
पिटकां यौवनोद्भूतां हन्त्यकालजरापहम् ॥ ६१
[3]स्नेहः स्यान्मृगनाभिजोऽतिसुरभिः केश्यो गुरुर्बृंहणो
वातासृक्कफकुष्ठदुष्टपिडकाकण्डूतिजन्तुप्रणुत् ।
चेतःकान्तिविवृद्धिकृद्विषहरश्वेतोविकारापहः
श्रीसौभाग्ययशस्करो वितनुते सौख्यं सदा भूभुजाम् ॥ ६२

॥ मृगमद (जव्वादु) गुणाः ॥

[4]स्निग्धोष्णो मधुरस्सतिक्तलवणस्सान्द्रो गुरुः पिच्छिल-
स्त्वच्यश्शुक्रविवर्धनो विषहरः केश्यः सुगन्धिश्शुभः ।
कण्डूकुष्ठकफानिलक्रिमिहरः कान्त्या वपुःपुष्टिकृ-
द्धृस्यो [5]वर्णबलप्रदो मृगमदस्सौभाग्यलक्ष्मीकरः ॥ ६३

॥ तुरुष्कगुणाः ॥

[6]तुरुष्कः कटुतिक्तोष्णः स्निग्धो वातबलासजित् ।
[7]त्वच्योऽथ कण्डुकुष्ठघ्नः सुरभिर्देवताप्रियः ॥ ६४

॥ पुष्पसामान्यगुणाः ॥

लक्ष्मीसौभाग्यपुष्ट्यायुर्धात्विन्द्रियबलप्रदम् ।

---

1. नतु 2. पचौपुनुगु मा० 3. तस्पुनुक मा०
4. जव्वाडु मा० 5. वर्ण्यं 6. निर्यासः 7. त्वचोद्

स्वेदक्लेदसमुद्भूतमलदौर्गन्ध्यनाशनम् ॥ ६५

॥ चम्पकगुणाः ॥

[1]चम्पकं विशदं शीतं चक्षुष्यं कटुकं लघु ।
वातश्लेष्महरं वृष्यं तृष्णादाहविषापहम् ॥ ६६

॥ केतकीकुसुमगुणाः ॥

श्लेष्मवातहरं तिक्तं सुगन्धि विशदं लघु ।
केतकीकुसुमं सोष्णं पुष्पाणां प्रवरं स्मृतम् ॥ ६७

॥ पुन्नागकुसुमगुणाः ॥

[2]वर्णप्रसादनं शीतं पुन्नागं कफपित्तजित् ।
चित्तमूर्ध्नोर्भ्रमं जाड्यं कण्डूं कोठं विषं हरेत् ॥ ६८

॥ पाटलीकुसुमगुणाः ॥

पाटली तिक्तमधुरा कषायोष्णानिलास्रजित् ।
गुर्वी तृड्दाहवमथुहिक्कारोचककासकृत् ॥ ६९

॥ बकुलकुसुमगुणाः ॥

कषायं स्वादु वकुलं कटुपाकं हिमं गुरु ।
शिरोरोगहरं [3]केश्यं ग्राहि सौभाग्यवर्धनम् ॥ ७०

॥ नारङ्गकुसुमगुणाः ॥

नारङ्गपुष्पं कटुकं सुगन्धि विशदं लघु ।
केश्यं स्नैग्ध्यकरं कण्डूकृमिवातकफापहम् ॥ ७१

॥ माधवीकुसुमगुणाः ॥

माधवी तिक्तमधुरा शीतला श्लेष्मनाशिनी ।

---

1. संपगि भा०  2. पुन्नपु भा०  3. स्यंका

शिरोरोगं विषं दाहं निहन्ति श्लेष्मजं व्रणम् ॥ ७२

॥ जाजीकुसुमगुणाः ॥

जाजी सतिक्तकटुका वातपित्तकफास्रजित् ।
केशमार्दवकृत्स्निग्धा गन्धाढ्या कान्तिवर्धिनी ॥ ७३

॥ यूथिकाकुसुमगुणाः ॥

[1]यूथिका तिक्तमधुरा श्लेष्मला रक्तपित्तजित् ।
केशवृद्धिकरी हृद्या चक्षुष्या ग्राहिणी गुरुः ॥ ७४

॥ मल्लिकाकुसुमगुणाः ॥

[2]मल्लिका तिक्तकटुका मधुरोष्णास्रपित्तजित् ।
वातश्लेष्मप्रशमनी नेत्रामयनिषूदनी ॥ ७५

॥ कुटजमल्लिकाकुसुमगुणाः ॥

[3]सुगन्धं कौटजं पुष्पं दोषघ्नं दाहसिद्धिदम् ।

॥ वासन्तीकुसुमगुणाः ॥

[4]वासन्तीकुसुमं हृद्यं वातश्लेष्मविनाशनम् ॥
सुगन्धि कान्तिकृद्वश्यं क्रिमिकुष्ठतृषापहम् ॥ ७६

॥ शतपत्रिकाकुसुमगुणाः ॥

[5]सोष्णं कषायं मधुरं लघु संग्राहि दीपनम् ।
शिरोभ्रमविषच्छर्दिनाशनं शतपत्रिकम् ॥ ७७

---

1. मोल्लपू भा॰ 2. मल्लिकै भा॰
13. मोण्डुमल्लि भा॰ 4. पिल्लवाल्लि भा॰
5. जवन्ति भा॰

॥ करवीरकुसुमगुणाः ॥

[1]कटूष्णं तिक्तकटुकं करवीरं कफास्रनुत् ।
केश्यं नेत्रहितं शीर्षकुष्ठकण्डूव्रणापहम् ॥ ७८

॥ हस्तिकर्णीकुसुमम् ॥

हस्तिकर्ण्यास्तु कुसुममुष्णं कुष्ठक्रिमिप्रणुत् ।

॥ सौगन्धिककुसुमगुणाः॥

[2]सौगन्धिकं हिमं स्वादु तिक्तं नेत्रप्रसादनम् ॥ ७९
सुगन्धि श्रीकरं वृष्यं विषतृड्दाहनाशनम् ।

॥ जपाकुसुमगुणाः॥

सकषायं रक्तपुष्पं वातश्लेष्मविषार्तिजित् ॥ ८०
तैलसिद्धं निहन्त्याशु वह्निप्लोषभवं व्रणम् ।

॥ इन्दीवरकुसुमगुणाः ॥

[3]इन्दीवरस्य पुष्पञ्च पित्तघ्नं शीतलं परम् ॥ ८१

॥ पद्मगुणाः ॥

[4]कषायमधुरं शीतं पद्मं पित्तकफास्रजित् ।
सुगन्धि भ्रान्तिसन्तापशान्तिदं तर्पणं परम् ॥ ८२

॥ कुह्लीकुसुमगुणाः ॥

कषायमधुरा हृद्या कान्तिसौभाग्यवर्धनी ।
केश्या यूकादिदोषघ्नी चक्षुष्या कुह्ली मता ॥ ८३

---

1. अकरि भा०  2. चंगलवपू भा०
3. ककवपू भा०  4. तामरपू भा०

॥ ह्रीबेरगुणाः ॥

[1]ह्रीबेरं शीतलं तिक्तं लघु दीपनपाचनम् ।
निर्वापणं ज्वरच्छर्दितृष्णादाहातिसारजित् ॥ ८४

॥ दवनगुणाः ॥

दवनः स्याद्रसे तिक्तो विषघ्नो भूतदोषनुत् ।
त्रिदोषशमनो हृद्यगन्धः कुष्ठापहस्स्मृतः ॥ ८५

॥ मरुबकगुणाः ॥

[2]उष्णवीर्यं मरुवकं समीरणविकारजित् ।
सुगन्धातिशयाद्धन्ति क्षोभं यूकादिसंभवम् ॥ ८६

॥ पुष्पधारणकालनियमः ॥

मुहूर्तं जातिकुसुमं कुटजं[3] याममात्रकम् ।
श्रीकर्णे यूथिका तद्वन्माधवी चैकरात्रकम् ॥ ८७
यामद्वयन्तु नेपाळमर्धरात्रन्तु मल्लिका ।
चाम्पेयकमहोरात्रं शतपत्रं द्विरात्रकम् ॥ ८८
धार्यं त्रिरात्रं कल्हारं पञ्चरात्रं तु केतकम् ।
करवीरं कुरवकं वकुळं पाटलं तथा ॥ ८९
यावद्वहति सौरभ्यं तावदेव विधारयेत् ।
मलिने मल्लिका धार्या निर्मले जातिकौटजम् ॥ ९०
अभ्यङ्गे केतकी धार्या कल्हारं धारयेत्सदा ।

*॥ कुसुमद्रुति विधिः ॥

वज्रक्षीरेण [4]संशुष्कशुभ्रवस्त्रं च लेपयेत् ।

---

1. बहिबेर मा० 2. मरु मा० 3. कुटचं

* अत्र कुसुमद्रुतिविध्यादिर्मंळबन्धका विकाराश्च मातृकायां प्रकरणान्तरोप लब्धा अत्र संग्रथिताः ।

4. संवस्त

आतपे शोषितं कुर्यादित्येवं दिनसप्तकम् ॥ ९१
जाजिपुष्पं पलैकन्तु निष्कमात्रं तु टंकणम् ।
क्षौद्रं निष्कत्रयं योज्यं सर्वमेकत्र लोलयेत् ॥ ९२
मृत्कांस्यपात्रके घर्मे स्थितं वा काचभाजने ।
आच्छाद्य पूर्ववस्त्रेण जलसिक्तेन तत्क्षणात् । ९३
द्रवन्ति तानि पुष्पाणि युञ्ज्याद्योगेषु तद्द्रवम् ।
अनेनैव प्रकारेण पुष्पाणां वै पृथक् पृथक् ॥ ९४
द्रुतिमन्यां सुगन्धि तां गन्धराजेषु योजयेत् ।

॥ कदलीफलद्रुतिः ॥

आर्द्रवंशत्वचा पिष्टं द्रवं स्यात्कादळं फलम् ॥ ९५

॥ मलबन्धजा विकाराः ॥

मलबन्धाद्विदाहश्च मलबन्धोऽग्निनाशनः ।
मलबन्धाज्ज्वरस्तीव्रो [1]मलबन्धोऽग्निबाधकः ॥ ९६
मलबन्धाच्छोफरोगो मलबन्धादजीर्णकम् ।
मलबन्धात् [2]कामिला स्यान्मलबन्धाद्रुजोद्भवः ॥ ९७

॥ स्तन्यगुणाः ॥

स्तन्यं बृंहणमग्निदीप्तिजननं दोषत्रयोच्चाटनं
कासश्वासहरं महाविषहरं कायाग्निसन्दीपनम् ।
बालेष्वग्निहरं विषक्षयहरं पाण्ड्वा[3]दिरोगापहं
चक्षुष्यं नयनामयव्रणहरं स्थौल्यप्रदं पुष्टिदम् ॥ ९८

॥ वस्त्रधारणगुणाः ॥

आयुष्यं कान्तिसौभाग्यकरमुत्साहकारणम् ।
वातपित्तहरं वर्ण्यं यशस्यं वस्त्रधारणम् ॥ ९९

---

1. मलाग्निबाधितम्　2. मलाच्च कामिल्याः　3. चरेतोपहं

॥ श्वेतवस्त्रधारणगुणाः ॥

[1]काम्यं यशस्यमायुष्यमलक्ष्मीघ्नं प्रहर्षणम् ।
श्रीमत्पारिषदं शस्तं निर्मलाम्बरधारणम् ॥ १००

॥ काषायवस्त्रधारणगुणाः ॥

[2]काषायवसनं शीतं मेध्यं पित्तानिलापहम् ।

॥ हारिद्रवस्त्रधारणगुणाः ॥

[3]हारिद्रमंशुकं हृद्यमुष्णं कण्डूकफापहम् ॥ १०१

॥ अरुणवस्त्रधारणगुणाः ॥

[4]जपाप्रसूनसंकाशं वस्त्रं वातकफापहम् ।

॥ माञ्जिष्ठवस्त्रधारणगुणाः ॥

[5]मञ्जिष्ठारुणितं वस्त्रमुष्णवीर्यं रतिप्रदम् ॥ १०२
वातश्लेष्मप्रजननं पित्तलं [6]त्वक्प्रसादनम् ।

[7] ॥ क्षौमादिधारणगुणाः ॥

क्षौमादिधारणं स्पर्शशीतं वातश्रमापहम् ॥ १०३
कान्तिसौभाग्यजननं मनसः प्रीणनं परम् ॥

॥ कूर्पासादिधारणगुणाः ॥

[8]वातातपरजस्स्वेदमलघ्नं कीर्तिवर्धनम् ।
वलकर्णकरं श्रेष्ठं सुखं कूर्पासधारणम् ॥ १०४

---

1. वेळुपिडवै भा०
2. काविचीर भा०
3. पसुपुचीर भा०
4. वेसचीर भा०
5. चन्द्रकाविचीर भा०
6. त्वक्प्रसादनम् भा०
7. वेळुपट्टुमोवकवविश्रुपम भा०
8. चोक्कायी० भा०

[1]वारवाण [2]ऋजुर्वर्णतेजोबल[3]विवर्धनः ।

॥ उष्णीषगुणाः ॥

[4]चक्षुष्यं केश्यमुष्णीषं वातातपरजोऽपहम् ॥ १०५

॥ कम्बळगुणाः ॥

[5]वातघ्नं पित्तकृद्रूक्षं स्वेदकृल्लघु दाहकृत् ।
श्वासशूलोपशमनं कम्बळं सर्वदा शुचि ॥ १०६

[6]॥ ऋतुभेदेन वस्त्रविशेषः ॥

रक्तपीतं च कौशेयमुष्णं हेमन्तशीतयोः ।
श्वेतं सुसूक्ष्मकाषायं लघु ग्रीष्मवसन्तयोः ॥ १०७
वर्षासु रोमजं सान्द्रं मृदु श्वेतं घनात्यये ।

॥ निषिद्धवस्त्रम् ॥

मलिनं परवस्त्रं च स्त्रीधृतं क्रिमिभक्षितम् ॥ १०८
खण्डितं मूषिकैर्विद्धं दग्धं च वसनं त्यजेत् ।

॥ निषिद्धवस्त्रदोषाः ॥

मलिनं न शिवं तत्तु कण्डूत्वग्दोषकारणम् ।
सुकृतस्य फलं नास्ति परवस्त्रविधारणात् ॥ १०९
शौर्यहानिर्दुर्भगत्वं स्त्रीवस्त्रेण प्रजायते ।
क्रिमिदग्धममङ्गल्यं [7]पीडा स्यात्खण्डितेन तु ॥ ११०
भयदं मूषिकैर्विद्धं दग्धेन च मृतिर्भवेत् ।

---

1. जगें भा०  2. वारवाणो ऋजुर्बाण  3. वर्धनम्.
4. तलचुट. भा०  5. कंबळी, भा०
6. ऋतुवुलनु वस्त्रधारणविशेषम्. भा०  7. ज्येष्ठा.

॥ चामरगुणाः ॥

मङ्गल्यं चामरं हृद्यमोजस्यं कीर्तिवर्धनम् ।
श्रमभ्रमक्लमहरं चक्षुष्यं शुचि धारणम् ॥ ११

॥ छत्रगुणाः ॥

[1]वर्षानिलरजोधर्महिमादीनां निवारणम् ।
वर्ण्यं नेत्रहितं छत्रं देहसौख्यकरं सदा ॥ ११२

॥ पादुकागुणाः ॥

[2]पादरोगहरं वृष्यमायुष्यं चक्षुषो हितम् ।
सुखप्रचारमोजस्यं सदा पादुकधारणम् ॥ ११३
[3]पवित्रं पादुकायानं पादरोगश्रमापहम् ।

[4]॥ स्वर्णादिकाळाची ॥

हृद्या वृष्या दोषहरा स्याद्
[5]हैमी भूयो रौप्या रुच्या ।
पित्तजपाण्डुविकारघ्नी स्यात्
कांस्या तिक्ता लोचनरम्या ॥ ११४
शौल्ब्यात्यन्तं शुद्धा पथ्या-
पस्मृतिहन्त्री किल काळाची ॥ ११५

॥ दन्तधावनगुणाः ॥

वटकार्जुनकारञ्ज [6]खदिरार्कासनैः कृतम् ।
श्लेष्मोपदेहदन्तास्यमलदौर्गन्ध्यनाशनम् ॥ ११६
चक्षुष्यं श्रोत्रनासास्यशोधनं दन्तधावनम् ।
रुच्यं सुगन्धं विशदं ताम्बूल्या दन्तधावनम् ॥ ११७

1. गोक्षु. भा० 2. पादरक्ष. भा० 3. पापकोळ भा०
4. काळाशि. भा० 5. हैमिर्भूयो 6 खदिरार्येश्वनैः

॥ [1]दन्तधावनवर्ज्याः ॥

अहितं कर्णहृन्नेत्रशीर्षतृष्णा[2]ऽऽस्यरोगिणाम् ।
[3]अर्दिताजीर्णवमथु [4]मूर्धरुक्श्वासकासिनाम् ॥ ११८

॥ [5]जिह्वावलेखनगुणाः ॥

जिह्वाऽऽस्यमलवैरस्यपूतिगन्धप्रसेकजित् ।
रुचिवैशद्यजननं हृद्यं जिह्वावलेखनम् ॥ ११९

॥ गण्डूषगुणाः ॥

सुखोष्णोदकगण्डूषैर्जायते वक्त्रलाघवम् ।

॥ मुखप्रक्षालनगुणाः ॥

व्यङ्गास्यशोषपित्तासृङ्नीलिमापिटकापहम् ॥ १२०
मुखप्रक्षाळनं दृष्टिप्रसादजननं परम् ॥

॥ पादप्रक्षाळनगुणाः ॥

पादप्रक्षाळनं पादमलरोगश्रमापहम् ॥ १२१
चक्षुःप्रसादनं वृष्यमायुष्यं प्रीतिवर्धनम् ।

॥ स्वर्णरौप्यपात्रभोजनगुणाः ॥

स्थाने स्वर्णकृतेऽशनं हिततरं सौभाग्यपुष्टिप्रदं
वृष्यं दीपनकारि शोफगरजिद्दोषापहं बृंहणम् ।
शुद्धं रौप्यकृते कषायरसवत्पित्तापहं क्ष्वेळजित्
पाण्डुघ्नं लघु धातुवर्धनतरं स्निग्धं वयःस्थापनम् ॥ १२२

॥ कांस्यताम्रपात्रभोजनगुणाः ॥

पात्रे [6]कांस्यकृते त्रिदोषशमनं पथ्यं च पाण्ड्वादिहृत्

---

1 दन्तधावनं कानिवर मा० 2 सुं 3 अदि
4 मूर्धावसन 5 नाळिकशोधनम् ॥मा० 6. कंस

तिक्तं नेत्रहितं सरं सुविशदं रूक्षं परं [1]लेखनम् ।
रुच्यं पापहरं पवित्रमधिकं भूतग्रहापस्मृति-
व्याध्युन्मादहरं समीरणहरं [2]ताम्रात्कृते भोजनम् ॥ १२३

॥ आयसमार्तिकादिपात्रभोजनगुणाः ॥

कान्तायोरचिते तु [3]भुक्तमशनं सिद्धिप्रदं कामिला-
[4]शोफव्याधिसमस्तपाण्डुहरणं वर्ण्यं भृशञ्चोत्तमम् ।
[5]मृद्दार्वश्ममयेषु भोजनकृतालक्ष्मीविनाशो रुचि-
[6]मेंदःस्थूलशरीरकार्श्यगुणता भूया[7]त्तथा वत्सरात् । १२४

॥ कदलीपत्रभोजनगुणाः ॥

बल्यं विषघ्नं दोषघ्नं वृष्यं रुच्यग्निदीपनम् ।
शुद्धं लघु हिमं वर्ण्यं कदळीपत्रभोजनम् ॥ १२५

॥ पलाशपत्रभोजनगुणाः ॥

पालाशभोजनं शुद्धं वातश्लेष्महरं परम् ।
शूलगुल्मोदरहरं सोष्णं दीपनरोचनम् ॥ १२६

॥ पनसपत्रभोजनगुणाः ॥

श्रेष्ठं पनसजे पत्रे भोजनं रुचिकारकम् ।
वातश्लेष्मप्रशमनं बृंहणं वह्निदीपनम् ॥ १२७

[8]॥ नारिकेलपत्रभोजनगुणाः ॥

नारिकेळस्य पत्रे तु भोजनं क्रिमिनाशनम् ।

---

1 लेखनम्. 2. कृते. 3 पात्र
4 शोभ 5 मृद्दारुका 6 मेंदः
7 तादा वासरम् 8 टेंकाका कृताव्यकुभोजनम् भा०

॥ तालीदलपात्रभोजनगुणाः ॥

अनेकदोषहरणं रुच्यं तालीदले तथा ॥ १२८

॥ शाकपत्रपात्रभोजनगुणाः ॥

[1]शाकपत्रं [2]तथा रुच्यं वातलं पित्तनाशनम् ।

॥ अर्कपत्रपात्रभोजनगुणाः ॥

[3]अर्कपत्रे भृशं रूक्षं क्रिमिघ्नं [4]शोफनाशनम् ॥ १२९

॥ एरण्डपत्रपात्रभोजनगुणाः ॥

[5]वातश्लेष्मघ्नमेरण्डपत्रभोजनमग्निकृत् ।

॥ क्षीरिवृक्षपत्रभोजनगुणाः ॥

[6]पत्रेषु क्षीरवृक्षाणां भोजनं गुरु शीतळम् ।
तृष्णादाहास्रपित्तघ्नं मेध्यं वातकफप्रदम् ॥ १३०

॥ पद्मपत्रभोजनगुणाः ॥

[7]निन्दितं पद्मिनीपत्रे [8]भोजनं वातकोपनम् ।
अग्निमान्द्यकरं रूक्षं श्रीसौभाग्यविनाशनम् ॥ १३१

जलपत्रभोजननिषेधः ॥

कुमुदं चोत्पलं चैव तथैवारुणमुत्पलम् ।
सर्वाणि जलपत्राणि भोजनेषु विवर्जयेत् ॥ १३२

॥ पाणिपात्रभोजनगुणाः ॥

पवित्रं पापहरणं पाणिपात्रे तु भोजनम् ।
योगिनां शस्यते नित्यं सर्वक्लेशनिवारणम् ॥ १३३

---

1 तेष्वेकु भा०    2 तदा    3 जिह्वेषाकु भा०
4 शोभ    5 आमिद्पाकु भा०    6 पाळुगकपत्रम् भा०
7 तामरपाकु भा०    8 विन्दित

[1]॥ पीठलक्षणम् ॥

नात्युन्नतं नातिनतं त्रिपादी भोजने सुखा ।

॥ स्थलशुद्धिविधिः ॥

चतुरश्रं ब्राह्मणस्य त्रिकोणं क्षत्रियस्य तु ॥ १३४
वैश्यस्य वर्तुलाकारं शूद्रस्याद्भिरवोक्षणम् ।

निर्विश्यते पिशाचाद्या न हरन्ति न संशयः ॥ १३५

[2]॥ पूर्वाह्णभोज्या ऋतवः ॥

[3]नितरामायताः स्युस्तु क्षपा [4]येषु ऋतुष्वतः ।
तेषु तत्प्रत्यनीकार्थं भुञ्जीत प्रातरेव तु ॥ १३६

॥ अपराह्णभोज्य ऋतवः ॥

येषु चापि भवेयुश्च दिवसा भृशमायताः ।
तेषु तत्कालविहितमपराह्णे प्रशस्यते ॥ १३७

॥ समभोज्या ऋतवः ॥

रजन्यो दिवसाश्चैव येषु चापि समाः स्मृताः ।
कृत्वा सममहोरात्रं तेषु कुर्वीत भोजनम् ॥ १३८

॥ आहारयोग्यकालः ॥

विसृष्टे विण्मूत्रे हृदि सुविमले दोषे स्वपथगे
विशुद्धे चोद्गारे क्षुदुपगमने वातेऽनुसरति ।
तथाऽग्नावुद्रिक्ते विशदकरणे देहे च सुलघौ
प्रयुञ्जीताहारं विधिनियमितं कालस्स हि मतः ॥ १३९

---

1 नात्युकाल्लपीठम् ॥ मा०  
2. ऋतुविशेषत्तिल् आहारकालम्. मा०  
3. वी ततपा.  
4. येषु.

॥ भुक्तस्य चतुर्धा विनियोगः ॥

क्रिमिभिर्भक्षितः पादः पादोऽग्नेरिन्धनो भवेत् ।
[1]पादोऽन्नस्य तु किट्टः स्यात्पादोऽन्यः सारवान् मतः ॥ १४०

॥ कालभोजनाकरणदोषाः ॥

आहारकाले संप्राप्ते यो न भुङ्क्ते बुभुक्षितः ।
तस्य सीदति कायाग्निर्निरिन्धन [2]इवानलः ॥ १४१

॥ षड्रससेवाक्रमः ॥

क्षुधया परितप्तस्य कुप्यतः पित्तमारुतौ ।
आदौ मधुरमेवाद्यादनयोरुपशान्तये ॥ १४२
मध्ये लवणमम्लं च वह्नेरुद्दीपनं परम् ।
अन्ते तु कटुकं तिक्तं कषायं च [3]कफापहम् ॥ १४३

॥ दिग्विशेषादाहारफलम् ॥

आयुषे प्राङ्मुखोऽश्नीयाद्यशसे दक्षिणामुखः ।
श्रियै प्रत्यङ्मुखोऽश्नीयान्न कदाचिदुदङ्मुखः ॥ १४४

॥ छायाऽऽतपगुणाः ॥

[4]आतपो भ्रमतृड्दाहस्वेदमूर्छाविवर्णताम् ।
कुर्यात्पित्तास्रवह्निं च [5]छाया त्वेतान्यपोहति ॥ १४५

॥ तमसो गुणाः ॥

[6]तमो मोहावहं नित्यं पित्तघ्नं जाड्यकारणम् ।

---

1. पादोन्यस्य 2. इवानिलः 3. कफावहम्
4. खेण्ड मा० 5. नीडा मा० 6. चीकिटि मा०

॥ चन्द्रिकागुणाः ॥

[1]मोहमूर्च्छाभ्रमहरी चेतोदृष्टिप्रसादिनी ।
तृड्दाहपित्तशमनी चन्द्रिकात्यन्तशीतला ॥ १४६

॥ दीपगुणाः ॥

प्रदीपः कान्तिजननो हृद्यो लक्ष्मीविवर्धनः ।

॥ अग्निगुणाः ॥

[2]अग्निर्वातकफस्तम्भशीतवेपथुनाशनः ।
आमाभिष्यन्दजननो रक्तपित्तप्रदूषणः ॥ १४७

॥ दिग्भेदेन वायुगुणाः ॥

[3]पुरश्चामोद्रेकं प्रबलमपि शूलं च जडता-
मभिष्यन्दी रूक्षः श्वसनकसनार्शोविपरुजम् ।
तथा मृत्युं दोषं जनयति च कुष्ठं क्रिमिगणं
स तीक्ष्णः पाश्चात्यः कफगरलतृड्दाहशमनः ॥ १४८
[4]तथा याम्यादोजोज्वररुधिरपित्ताक्षिसुखदः
कटुः शीतः स्निग्धो मधुरबहुदोषोपशमनः ।
*कषायः कौबेरादनलबलमेवाशु कुरुते १४९

[5] ॥ व्यायामगुणाः ॥

[6]शरीरायामजन[7]नं कर्म व्यायाम उच्यते ।
कान्तिः शरीरोपचयो गात्राणां सुविभक्तता ॥ १५०
दीप्ताग्नित्वमनालस्यं स्थिरत्वमपि लाघवम् ।
श्रमक्लमपिपासोष्णशीतादीनां सहिष्णुता ॥ १५१

---

1 वेन्तेक मा० 2. निप्सु मा० 3. परञ्चा
4. रत्वजा 5. अन्देलु मा० 6. शरीरायास
7. वाक्कर्म * अस्य तुरीयः पादो नोपलभ्यते.

लाघवं कर्मसामर्थ्यं व्यायामादुपजायते ।

॥ देवपूजागुणाः ॥

यशस्यं स्वर्ग्यमायुष्यं धनधान्यविवर्धनम् ॥ १५२
देवतापितृविप्राणां पूजनं गोत्रवृद्धिदम् ।

॥ आदर्शगुणाः ॥

प्रत्यक्षगुणदर्शित्वमुत्तमाङ्गस्य हर्षणम् ॥ १५३
आगन्तुदोष[1]हरणं श्रीमदादर्शदर्शनम् ॥

॥ रत्नाभरणधारण गुणाः ॥

धन्यं मङ्गल्यमायुष्यं श्रीमद्व्यसनसूदनम् ॥ १५४
हर्षणं काम्यमायुष्यं रत्नाभरणधारणम् ॥

॥ वितानादिगुणाः ॥

[2]वितानं निर्मलं पुण्यं वृष्यमाच्छादनं परम् ॥ १५५
[3] [4]यथर्तुविहितं दूष्यश्रमतृड्दाहमोहजित् ।
वर्णकान्तिकरं बल्यं यथास्वं दोषनाशनम् ॥ १५६

॥ कायमानगुणाः ॥

[5]श्रम[6]क्लमहरं बल्यं कायमानं मनोहरम् ।
वृष्यं सौभाग्यजननं पित्तदाहनिबर्हणम् ॥ १५७

॥ खट्वागुणाः ॥

अश्लथाऽनिलपित्तघ्नी सर्वेन्द्रियबलप्रदा ।
[7]मृद्वी कक्ष्यावती खट्वा दोषत्रयनिबर्हणी ।

---

1. निघ्नन्ति 2. मेल्कट्टु भा० 3. पान्पु भा०
4. यदर्थ 5. चप्परम् भा० 6. सम
7. पट्टेमञ्चम् भा०

। तल्पगुणाः ॥

[1] तल्पं लक्ष्मीकरं चैव मेदोघ्नं त्वक्प्रसादनम् ॥ १५८
श्रमानिलहरं हृद्यं पुष्टिनिद्राधृतिप्रदम् ।
सुखशय्यासनं दुःखं विपरीतगुणं मतम् ॥ १५९

॥ स्त्रीसंगगुणाः ॥

धातुश्लथत्वं लघुतां शान्तिमग्नेश्च दीपनम् ।
युक्त्या कृता रतिः कुर्याच्चेतसो निर्वृतिं पराम् ॥ १६०

॥ अतिसंग[2]दोषाः ॥

अतिसङ्गात्कृशं रूक्षमङ्गं दाहः शिरोभ्रमः ।
निद्रा जाड्यमचक्षुष्यं क्षयशूलक्लम[3]भ्रमाः ॥ १६१
अङ्गदाहश्च तत्सप्तधातुपीडाकरं भवेत् ।

॥ निद्रागुणाः ॥

पुष्टिं वर्णबलोत्साहमग्निदीप्तिमन्द्रितां ॥ १६२
करोति धातु[4]साम्यं च निद्रा[5]काले निषेविता ।

[6]॥ आस्यागुणाः ॥

आस्या वर्णकरी स्थौल्यसौकुमार्यकरी सुखा ॥ १६३

[7]॥ अध्वगमनगुणाः ॥

अध्वा वर्णहरः स्थौल्यसौकुमार्यविनाशनः ।

[8]॥ चङ्क्रमणगुणाः ॥

यत्तु चङ्क्रमणं नाति देहपीडाकरं भवेत् ॥ १६४
तदायुर्बलमेधाग्निप्रदमिन्द्रियवर्धनम् ।

---

1. मेदा भा० 2. गुणा 3. भ्रमम्
4. सौम्यं भा० 5. काले 6. कूर्चुण्ठेदि भा०
7. द्रोवनडिपेदि भा० 8. तिरिगेदि भा०

[1]॥ अनुपानत्कभ्रमणे दोषाः ॥

अनारोग्यमनायुष्यं चक्षुषोरुपघातकृत् ॥ १६५
पादाभ्या[2]मनुपानत्कं सदा चङ्क्रमणं नृणाम् ।

॥ दैनन्दिनम् ॥

व्यायामं श्रमनाशाय वातनाशाय मर्दनम् ॥ १६६
स्नानं त्रिविधनाशाय [illegible] समाचरेत् ।

[3]॥ शिबिकागुणाः ॥

अर्शोऽनिलघ्नी शमनी लघुः पुष्टिवर्धनी ॥ १६७
[4]श्रमक्लमहरी हृद्या शिबिका राजपूजिता ।

[5]॥ आन्दोलिकागुणाः ॥

आन्दोलिका श्रमहरी चायुष्या वीर्यवर्धिनी ॥ १६८

॥ गजारोहणगुणाः ॥

माङ्गल्यतेजोबलकीर्तिसंप-
दायुष्करं देहदृढत्वकारि ।
मेदःकफघ्नं लघु दीपनं स्या-
दारोहणं भद्रमतङ्गजस्य ॥ १६९

॥ अश्वारोहणगुणाः ॥

अश्वारोहणमग्निदीप्तिजननं बल्यं वयःस्थापनं
मेदोघ्नं कफकोपशोषणकरं स्वेदोद्गमोत्पादकम् ।

---

1. पादरक्षालेपनहितोदि भा०
2. मनुपादाभ्यां
3. बरशाल भा०
4. पालकी डोला भा०
5. आन्दुलम्

तेजःकान्तिविवर्धनं रतिकरं कीर्तिप्रदं श्रीकरं
नो शस्तं श्रमिणां भगन्दरवतां पित्तासृगर्शोवताम् ॥ १७०

॥ रथारोहणगुणाः ॥

हेलायै हृदयाह्लादि स्वेदनं दीपनं सुखम् ।
वातपित्तकरं रूक्षं स्यन्दनारोहणं स्मृतम् ॥ १७१

॥ पट्टांशुकतालवृन्तगुणाः ॥

[1]पट्टांशुकेन रचितं वर्तुलं तालवृन्तकम् ।
तृड्दाहमदमूर्च्छायश्रमक्लमहरं परम् ॥ १७२

॥ वैणवव्यजनगुणाः ॥

[2]वैणवव्यजनं तद्वत्किञ्चित्तापहरं परम् ।

॥ क्षौरगुणाः ॥

पौष्टिकं धन्यमायुष्यं शुचिरूपविवर्धनम् ।
केशश्मश्रुनखादीनां कर्तनं संप्रसाधनम् ॥ १७३

॥ अभ्यङ्गगुणाः ॥

अभ्यङ्गमाचरेन्नित्यं स जराश्रमवातहा ।
दृष्टिप्रसादपुष्ट्यायुःस्वप्नसुत्वक्[3]दार्ढ्यकृत् ॥ १७४

॥ विशेषशीलनविधिः ॥

शिरश्श्रवणपादेषु तं विशेषेण शीलयेत् ।
मूर्ध्नोऽभ्यङ्गं ; कर्णयोश्शस्तमाहुः
कर्णाभ्यङ्गं ; पादरोगं निहन्यात् ।
पादाभ्यङ्गं ; नेत्ररोगं निहन्या-
न्नेत्राभ्यङ्गं हन्ति दन्तालिरोगान् ॥ १७५

---

1. आकम्पहम् भा०    2. शिशिरं भा०    3. गात्र

॥ ऋतुभेदेनाभ्यङ्गकालाः ॥

हेमन्ते नाडिकायुग्मं शिशिरे नाडिकात्रयम् ।
वसन्ते नाडिकाः पञ्च ग्रीष्मे षण्नाडिकास्तथा ॥ १७६
वर्षाकाले शरत्काले सद्यःस्नानं समाचरेत् ।

॥ अभ्यङ्गवर्ज्याः ॥

वर्ज्योऽभ्यङ्गः कफग्रस्तैः कृतसंशुद्ध्यजीर्णिभिः ॥ १७७

॥ पादाघातमर्दनगुणाः ॥

त्वग्दार्ढ्यं धातुपुष्टिं बलमपि च तनोः कान्तिमायुःप्रकर्षं
स्रोतश्शुद्धिं जरायाः परिभवमनलस्याभिवृद्धिं विधत्ते ।
जित्वा वातानशेषान् कफमपि सकलं मेदसश्च प्रवृद्धिं
पादाघातश्च युक्त्या निरुपमसहितं मर्दनं तद्वदेव ॥ १७८

॥ घृताभ्यङ्गगुणाः ॥

घृताभ्यङ्गः परं वर्ण्यः कान्तिसौभाग्यपुष्टिदः ।
आयुरारोग्यजनको देहसिद्धिरसायनः ॥ १७९

॥ स्नानगुणाः ॥

दीपनं वृष्यमायुष्यं स्नानमूर्जाबलप्रदम् ।
कण्डूमलश्रमस्वेदतन्द्रातृड्दाहपाप्मजित् ॥ १८०

॥ ऋतुचर्यासङ्ग्रहस्तत्र हेमन्तशिशिरचर्या ॥

[2]हेमन्ते शिशिरे च वातशमनैस्तैलैश्शिरोबस्तय-
स्सेकाभ्यञ्जनमर्दनानि विधिना स्नानं लघूष्णाम्बुना ।

---

1. मनसो
2. हेमन्तादि ऋतुवुल आचारमु भा०

चर्चा कुङ्कुमदर्पयोरनुगुणो [illegible] [illegible]लं मेदुरं
गोधूमेक्षुरसः सदा [illegible] क्षी[illegible] [illegible]ष्णोदकम् ॥ १८१

॥ वसन्तचर्या ॥

तीक्ष्णच्छर्दननावनादि[illegible] [illegible]
[2]स्नातश्चन्दनकुङ्कुमागरुकृतालेपः पुराणं यवम् ।
गोधूमं मधु जाङ्गलानि च [3]भजेन्[illegible]मध्वासवै-
र्मध्याह्नं गमयेद्वसन्तसमये गोष्ठीमि[illegible]सितः ॥ १८२

॥ ग्रीष्मचर्या ॥

ग्रीष्मे जाङ्गलशालिमुद्[illegible]दळीद्[illegible] [illegible] रसः
स्वच्छं *षाडवपानकं हि [illegible] सिता सक्तवः ।
[4]पानं पाटलवासितं सुशिशिरं [illegible] [illegible]
हाराश्चन्दनचन्द्रिका हिमगृहे [illegible] च [illegible]न्दिरे ॥ १८३

॥ [illegible]र्तुचर्या ॥

शुद्धेरास्थापनं स्यादनु [illegible]मन्ने जाङ्गलं मध्वरिष्टं
जीर्णं धान्यं च यूषं दधिरससहितं [illegible]र्जिका पञ्चकोलम् ।
पानीयं दिव्यकौपं[5] कथितमपि भजेद् दुर्दिने तु प्रभाते
व्यक्ताम्लस्नेहमन्नं स्फुटपटु च लघु क्षौद्रवद्विद्रवं च ॥ १८४

॥ शरच्चर्या ॥

तिक्तं नाम घृतं विरेचनमसृङ्मोक्षश्शरत्संगमे
सक्षीरं घृतशर्कराढ्यमशनं मुद्गः पटोलं मधु ।
धात्री जाङ्गल*रागषाडवरसः हंसोदकं चन्दनं
कर्पूरं कुसुमानि गीतहसितामोदाङ्गनालिङ्गनम् ॥ १८५

---

1. अहा 2. स्नानंचन्द 3. भवे
4. पादः 5. स्वकथितमपि * रागषाडवादिलक्षणं पृ.-56

॥ धूळिनिषेधः ॥

अजखरमहिषोष्ट्रपादपांसु-
स्तुषकणिका परिमार्जनीरजश्च ।
परमुखपरवस्त्रशूर्पजातो
मरुदपि देहभृतां करोत्यलक्ष्मीम् ॥ १८६

॥ वमनविरेचनयोः पूर्वोपचारः ॥

पूर्वेद्युरभ्यञ्जनमङ्गमर्दनं
[1]निशोपवासो घृतदुग्धपानम् ।
निवातशय्यारतिसङ्ग[2]वर्जनं
विरेचने कर्मणि वान्तिकर्मणि । १८७

**इति श्रीश्रीनिवासपण्डितराजविरचिते चिकित्सातिलके सूत्रस्थाने ऋतुचर्या नाम त्रयोदशोऽध्यायः ॥**

---

1. सश्री 2. वर्जितं

## ॥ अथ चतुर्दशोऽध्यायः ॥

॥ अथातो रोगानुत्पादनीयमध्यायं व्याख्यास्यामः ॥

॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥

### ॥ अविधार्या वेगाः ॥

वेगान्न धारयेद्वातविण्मूत्रक्षवतृट्क्षुधाम् ।
निद्राकासश्रमश्वास[1]जृम्भाश्रुच्छर्दिरेतसाम् ॥ १

### ॥ अधोवातरोधजा विकाराः ॥

अधोवातस्य रोधेन गुल्मोदावर्तरुक्क्लमाः ।
वातमूत्रशकृत्सङ्गदृष्ट्यग्निवधहृद्गदाः ॥ २

### ॥ शकृन्निरोधजा विकाराः ॥

शकृतः पिण्डिकोद्वेष्टप्रतिश्यायशिरोरुजः ।
मुखेन विट्प्रवृत्तिश्च पूर्वोक्ताश्चामयाः स्मृताः ॥ ३

### ॥ मूत्ररोधजा विकाराः ॥

अङ्गभङ्गाश्मरीवस्तिमेढ्रवङ्क्षणवेदनाः ।
मूत्रस्य रोधात्पूर्वे च प्रायो रोगाः

### ॥ तन्निरोधजविकारचिकित्साः ॥

तदौषधम् ॥ ४

वर्त्यभ्यङ्गावगाहाश्च स्वेदनं वस्तिकर्म च ।
अन्नपानं च विड्भेदि विड्रोधोत्थेषु यक्ष्मसु ॥ ५
मूत्रजेषु तु पाने च प्राग्भक्तं शस्यते घृतम् ।
जीर्णान्तिकं चोत्तमया मात्रया योजनाद्वयम् ॥ ६

---

1. जृम्भासृक्

अवपीडकमेतच्च संज्ञितं

॥ उद्गारनिरोधजरोगास्तच्चिकित्सा च ॥

धारणात्पुनः ।
उद्गारस्यारुचिः कम्पो विबन्धो हृदयोरसोः ॥ ७
आध्मानकासहिध्माश्च हिध्मावत्तत्र भेषजम् ।

॥ क्षुतिनिरोधजविकारास्तच्चिकित्सा च ॥

शिरोऽर्तीन्द्रियदौर्बल्यमन्यास्तम्भार्दितं क्षुतेः ॥ ८
तीक्ष्णधूमाञ्जनाघ्राणनावनार्कविलोकनैः ।
प्रवर्तयेत् क्षुतिं सक्तां स्नेहस्वेदौ च शीलयेत् ॥ ९

॥ तृष्णानिरोधजरोगास्तच्चिकित्सा च ॥

शोषाङ्गसादबाधिर्यसंमोहभ्रमहृद्गदाः ।
तृष्णाया निग्रहात्तत्र शीतस्सर्वो विधिर्हितः ॥ १०

॥ क्षुन्निरोधजविकारास्तच्चिकित्सा च ॥

अङ्गभङ्गारुचिग्लानिकार्श्यशूलभ्रमाः क्षुधः ।
तत्र योज्यं लघु स्निग्धमुष्णमल्पं च भोजनम् ॥ ११

॥ निद्रानिरोधजविकारास्तच्चिकित्सा च ॥

निद्राया मोहमूर्धाक्षिगौरवालस्यजृम्भिताः ।
अङ्गमर्दश्च तत्रेष्टः स्वप्नः संवाहनानि च ॥ १२

॥ कासनिरोधजरोगास्तच्चिकित्सा च ॥

कासस्य रोधात्तद्वृद्धिः श्वासारुचिहृदामयाः ।
शोषो हिध्मा च कार्योऽत्र कासहा सुतरां विधिः ॥ १३

॥ श्रमश्वासनिरोधजविकारास्तच्चिकित्सा च ॥

गुल्महृद्रोग[1]संमोहाः श्रमश्वासाद्विधारितात् ।

---

1. संमोहभ्रमा

हितं [1]विश्रमणं तत्र वातघ्नश्च क्रियाक्रमः ॥ १४

॥ जृम्भानिरोधजविकारास्तच्चिकित्सा च ॥

जृम्भायाः [2]क्षववद्रोगाः सर्वश्चानिलजिद्विधिः ।

॥ बाष्पनिरोधजविकारास्तच्चिकित्सा च ॥

पीनसाक्षिशिरोहृद्रुङ्मन्यास्तम्भारुचिभ्रमाः ॥ १५

सगुल्मा बाष्पतस्तत्र स्वप्नो मद्यं प्रियाः कथाः ।

॥ छर्दिनिग्रहजविकारास्तच्चिकित्सा च ॥

विसर्पकोठकुष्ठाक्षिकण्डूपाण्ड्वामयज्वराः ॥ १६

सकासश्वासहृल्लासव्यङ्गश्वयथवो वमेः ।

गण्डूषधूमानाहारं रूक्षं भुक्त्वा तदुद्वमः ॥ १७

व्यायामः स्रुतिरस्रस्य शस्तं चात्र विरेचनम् ।

सक्षारलवणं तैलमभ्यङ्गार्थे च शस्यते ॥ १८

॥ शुक्रनिरोधजविकारास्तच्चिकित्सा च ॥

शुक्रात्तत्स्रवणं गुह्यवेदना श्वयथुर्ज्वरः ।

हृद्व्यथा मूत्रसङ्गाङ्गभङ्ग[3]वृद्ध्यश्मषण्डताः ॥ १९

ताम्रचूडसुराशालिबस्त्यभ्यङ्गावगाहनम् ।

बस्तिशुद्धिकरैः सिद्धं भजेत् क्षीरं प्रियाः स्त्रियः ॥ २०

॥ वेगरोधे असाध्यलक्षणम् ॥

तृट्शूलार्तं त्यजेत्क्षीणं विड्वमं वेगरोधिनम् ।

॥ वेगरोधजेषु सामान्यविधिः ॥

रोगाः सर्वेऽपि जायन्ते वेगोदीरणधारणैः ॥ २१

निर्दिष्टं साधनं तत्र भूयिष्ठं ये तु तान् प्रति ।

---

1. विक्रमणं 2. क्षवद्रोगाः 3. वध्याश्म

ततश्चानेकधा प्रायः पवनो यत् प्रकुप्यति ॥ २२
अन्नपानौषधं तस्य युञ्जीतातोऽनुलोमनम् ।

॥ शोधनविधिः ॥

यतेत च यथाकालं मलानां शोधनं प्रति ॥ २३
अत्यर्थं संचितास्ते हि क्रुद्धाः स्युर्जीवितच्छिदः ।

॥ शोधनप्रशंसा ॥

दोषाः कदाचित् कुप्यन्ति जिता लङ्घनपाचनैः ॥ २४
ये तु संशोधनैः शुद्धा न तेषां पुनरुद्भवः ।

॥ भेषजक्षीणे बृंहणविधिः ॥

भेषजक्षपिते पथ्यमाहारैर्बृंहणं क्रमात् ॥ २५
शालिषष्टिकगोधूममुद्गमांसघृतादिभिः ।
हृद्यदीपनभैषज्यसंयोगाद्रुचिपक्तिदैः ॥ २६
अभ्यङ्गोद्वर्तनस्नाननिरूहस्नेहबस्तिभिः ।
तथा स लभते शर्म सर्वपावकपाटवम् ॥ २७
धीवर्णेन्द्रियनैर्मल्यं [1]वृषतां दैर्घ्यमायुषः ।

॥ आगन्तुरोगलक्षणम् ॥

ये भूतविषवाय्वग्निक्षतभङ्गादिसंभवाः ॥ २८
रागद्वेषभयाद्याश्च ते स्युरागन्तवो गदाः ।

॥ आगन्तुप्रतिषेधोपायः ॥

त्यागः प्रज्ञापराधानामिन्द्रियोपशमः स्मृतिः । २९
देशकालात्मविज्ञानं सद्वृत्तस्यानुवर्तनम् ।
अनुत्पत्त्यै समासेन विधिरेष प्रदर्शितः ॥ ३०

---

1. वृष्यतां

निजागन्तुविकाराणामुत्पन्नानां च शान्तये ।

॥ दोषशोधनकालः ॥

शीतोद्भवं दोषचयं वसन्ते
विशोधयन् ग्रीष्मजमभ्रकाले ।
घनात्यये वार्षिकमाशु सम्यक्
प्राप्नोति रोगानृतुजान्न जातु ॥ ३१

॥ इति श्रीश्रीनिवासपण्डितविरचिते चिकित्सातिलके सूत्रस्थाने
रोगानुत्पादनीयो नाम चतुर्दशोऽध्यायः ॥

## ॥ अथ पञ्चदशोऽध्यायः ॥

॥ अथातो द्रवद्रव्यविज्ञानीयमध्यायं व्याख्यास्यामः ॥

॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥

### ॥ तत्रादौ तोयवर्गः ॥

#### ॥ वर्षणस्वरूपम् ॥

महानिलोद्धूतचलज्जलेभ्यो
रत्नाकरेभ्यस्तु गभस्तयस्ते ।
आदाय तोयानि च वर्षयन्ति
ग्रीष्मावसाने जगतो हिताय ॥ १

#### ॥ गङ्गाम्बुलक्षणम् ॥

जीवनं तर्पणं हृद्यं ह्लादि बुद्धिप्रबोधनम् ।
तन्वव्यक्तरसं मृष्टं शीतं लघ्वमृतोपमम् ॥ २
गङ्गाम्बु नभसो भ्रष्टं स्पृष्टं त्वर्केन्दुमारुतैः ।
हिताहितत्वे तद्भूयो देशकालावपेक्षते ॥ ३
शीतं शुचि शिवं मृष्टं विमलं लघु षड्गुणम् ।
प्रकृत्या [1]दिव्यमुदकं विशेषादमृतोपमम् ॥ ४

#### ॥ शरज्जलप्रशंसा ॥

शारदे पश्चिमे मासि गाङ्गं शक्रः प्रवर्षति ।
शरदि ग्रहणं तस्मादान्तरिक्षस्य पूजितम् ॥ ५
गाङ्गमाश्वयुजे मासि प्रायो वर्षति वासवः ।
सामुद्रिकं वा विमलं पथ्यं तत्र तपज्जलम् ॥ ६

#### ॥ भूमिभेदेन जलगुणाः ॥

श्वेते कषायं तत्स्वादु कृष्णे [2]तिक्तं च पाण्डुरे ।

---

1. दीव्यं 2. लवं

नीले कषायमधुरं देशे लवणमूषरे ॥ ७
सक्षारं कपिले

॥ भूतगुणोल्बणजललक्षणानि ॥

मूर्तं निष्टमम्बुगुणाधिकं ।
मधुरं लवणाम्लं तु भवेद्भूमिगुणाधिकं ॥ ८
तेजोऽधिकं तिक्तकटु कषायं पवनाधिके ।
दिव्यानुकारि त्वव्यक्तरसत्वात् खगुणाधिके ॥ ९

॥ वर्ज्यजललक्षणम् ॥

न पिबेत् पङ्कशैवालतृण[1]पर्णाविलास्तृतम् ।
सूर्येन्दुपवनादृष्टमभिवृष्टघनं गुरु ॥ १०

॥ वार्षिकोदकस्य द्वैविध्यम् ॥

वार्षिकं तदहे वृष्टं भूयिष्ठमहितं जलम् ।
वृष्टं त्रिरात्रं यच्चैव प्रसन्नममृतोपमम् ॥ ११

॥ पथ्यापथ्यनदीलक्षणानि ॥

पश्चिमोदधिगाः शीघ्रवाहिन्यश्चामलोदकाः ।
पथ्याः समासात्ता नद्यो विपरीतास्ततोऽन्यथा ॥ १२

॥ हिमवदादिजानां गुणागुणाः ॥

उपलास्फालनाक्षेपविच्छेदैः खेदितोदकाः ।
हिमवन्मलयोद्भूताः पथ्यास्ता एव च [2]स्थिराः ॥ १३
क्रिमिश्लीपद[3]हृत्कण्ठशिरोरोगान् [4]प्रकुर्वते ।

---

1 वर्णा
2 स्थिताः
3 मूत्रकर्णो
4 प्रचक्षते

त्रिदोषकृत्सागराम्भो दोषघ्न्यः पारियात्रजाः ॥ १४

॥ पथ्यनदीलक्षणम् ॥

तीव्रवेगाः शुद्धजलाः पाषाणस्खलनाकुलाः ।
नद्यः पथ्या इति ज्ञेयाः सर्वपर्वतसंभवाः ॥ १५

॥ कौपादिजललक्षणानि ॥

[1]विद्यात् कूपतटाकादीन् जाङ्गलानूपशैलजान् ।
कौपं स्वादु त्रिदोषघ्नं लघु पथ्यं तु सर्वदा ॥ १६
सक्षारं कफवातघ्नं दीपनं पित्तकृत्परम् ।
तृष्णाघ्नं सारसं बल्यं कषायं मधुरं लघु ॥ १७
कषायकटुतिक्तं च ताटाकं गुरु वातलम् ।
चौण्डं तु पित्तलं दोषहरं प्रास्रवणोदकम् ॥ १८
औद्भिदं स्वादु पित्तघ्नं स्वादु वापीजलं लघु ।
नादेयं वातलं रूक्षं कटुकं वारि निर्दिशेत् ॥ १९
तोयं तु करकोद्भूतं गुरु स्थैर्यकरं हिमम् ।
तस्मात्त्रिगुणसंघातकफवातकरं मतम् ॥ २०

॥ अम्बुपानव्यवस्था ॥

नाम्बु पेयमशक्त्यां वा स्वल्पमल्पाग्निगुल्मिभिः ।
पाण्डूदरातिसारार्शोग्रहणीदोषशोषिभिः ॥ २१
ऋते शरन्निदाघाभ्यां पिबेत्[2] स्वस्थोऽपि चाल्पशः ।
काममप्यल्पमुदकं पेयं स्वौषधसंस्कृतम् ॥ २२
पाषाणरूप्यमृद्धेमजतुतापार्कतापितम् ।

॥ पानीयगुणविशेषाः ॥

पानीयं शीतमुष्णं वा त्रिदोषघ्नं तृडर्तिजित् ॥ २३

---

1. वीर्वात्    2 स्वस्थोपि

पञ्चकोलादिभिः सिद्धमल्पाग्नीनां हितं जलम् ।
समस्थूल[1]कृशा भक्तमध्यान्तप्रथमाम्बुपाः ॥ २४

॥ शीतोदकगुणाः ॥

शीतं मदात्ययग्लानिमूर्च्छाच्छर्दिश्रमभ्रमान् ।
तृष्णोष्णदाहपित्तास्रविषाण्यम्बु नियच्छति ॥ २५

॥ आमोदकवर्ज्याः ॥

अनवस्थितदोषाग्नेर्व्याधिक्षीणबलस्य च ।
नाल्पमप्याममुदकं हितं[2] तद्धि त्रिदोषकृत् ॥ २६

॥ उष्णोदकगुणाः ॥

दीपनं पाचनं [3]कण्ठ्यं लघूष्णं वस्तिशोधनम् ।
हिध्माध्मानानिलश्लेष्मसद्यःशुद्धे नवज्वरे ॥ २७
कासामपीनसश्वासपार्श्वरुक्षु च [4]शस्यते ।

॥ शृतोदकविशेषाणां गुणाः ॥

त्रिभागहीनं पित्तघ्नं हीनमर्धेन वातनुत् ॥ २८
कफघ्नं पादशेषं च पानीयं लघु दीपनम् ।
मरीचैर्जलदोषघ्नं शुण्ठ्या सिद्धं तृडर्तिजित् ॥ २९
भिनत्ति श्लेष्मसंघातं मारुतं चापकर्षति ।
अजीर्णं जरयत्याशु पीतमुष्णोदकं निशि ॥ ३०

॥ क्वथितशीतलजलगुणाः ॥

अनभिष्यन्दि लघु च तोयं क्वथितशीतलम् ।
पित्तयुक्ते हितं दोषे[5]व्यूषितं तत्त्रिदोषकृत् ॥ ३१

---

1 कृशा 2 तेर्धि 3 कण्ठं
4 शस्यते 5. व्युषितं

॥ विदाहे शीतपानविधिः ॥

तृषितस्तु विदग्धेन यः पिबेद्वारि शीतलम् ।
विदाहः प्रशमं याति शेषमन्नं च जीर्यते ॥ ३२

पुनरुष्णीकरणप्रतिषेधः ॥

पक्त्वा च शीतो निर्यूहः पुनस्तप्तो भवेद्यदि ।
पानीयं वा पुनस्तप्तं विषवद्धन्ति मानवम् ॥ ३३

॥ पानीयविशेषाणां पानव्यवस्था ॥

पानीयं न तु पानीयं पानीयेऽन्यप्रदेशजे ।
अजीर्णे क्वथितं चामे पक्वे जीर्णेऽपि नेतरत् ॥ ३४
शीते विधिरयं तप्ते त्वजीर्णे शिशिरं त्यजेत् ।

॥ भूरिजलपानदोषाः ॥

अतियोगेन सलिलं तृष्यतोऽपि प्रयोजितम् ॥ ३५
प्रयाति श्लेष्मपित्तत्वं [1]ज्वरितस्य विशेषतः ।

॥ पानीयप्रशंसा ॥

पानीयं प्राणिनां प्राणा विश्वमेव च तन्मयम् ॥ ३६
अतोऽत्यन्तनिरोधेन न क्वचिद्वारि वार्यते ।
आस्यशोषाङ्गसादाद्या मृत्युर्वा तदलाभतः ॥ ३७
न हि तोयाद्विना वृत्तिः स्वस्थस्य व्याधितस्य वा ।

॥ नालिकेरोदकगुणाः ॥

नाल्किकेरोदकं स्निग्धं स्वादु [2]वृष्यं हिमं लघु ॥ ३८
तृष्णापित्तानिलहरं दीपनं बस्तिशोधनम् ।

---

1 ज्वलितस्य 2 हृद्यं

॥ नालिकेराम्बुपानव्यवस्था ॥

नाळिकेराम्बु भक्तात् प्राग् गुल्माग्निसदनादिकृत् ॥ ३९
अतोऽपराह्णे पेयं स्यादिन्दुवच्छीतलं हितम् ।

॥ नालिकेराम्बुयोगः ॥

नाळिकेरफलं बालं सत्वचं च विचक्षणः ॥ ४०
द्विद्रोणे सलिले क्षिप्त्वा निर्जलं च विपाचयेत् ।
तस्यान्तस्स्थजलं पीतं मोचयेन्महतो ज्वरान् ॥ ४१
त्रिदिनेन महाघोरं दीर्घं चातुर्थिकं ज्वरम् ।

॥ वर्षासु वरावरतोये ॥

वर्षासु दिव्यनादेये परं तोये वरावरे । ४२

॥ इति तोयवर्गः ॥

* * *

## ॥ अथ क्षीरवर्गः ॥

॥ क्षीरसामान्यगुणाः ॥

स्वादुपाकरसं स्निग्धमोजस्यं [1]धातुवर्धनम् ।
वातपित्तहरं वृष्यं श्लेष्मलं गुरु शीतलम् ॥ १
प्रायः पयः

॥ गोक्षीरगुणाः ॥

अत्र गव्यं तु जीवनीयं रसायनम् ।
क्षतक्षीणहितं मेध्यं बल्यं स्तन्यकरं सरम् ॥ २
श्रमभ्रममदालक्ष्मीश्वासकासातितृट्क्षुधः ।
जीर्णज्वरं मूत्रकृच्छ्रं रक्तपित्तं च नाशयेत् ॥ ३

॥ माहिषक्षीरगुणाः ॥

हितमत्यग्न्यनिद्रेभ्यो गरीयो माहिषं हिमम् ।

---

1 धातु

॥ आजक्षीरगुणाः ॥

अल्पाम्बुपानव्यायामकटुतिक्ताशनैर्लघु ॥ ४
आजं शोषज्वरश्वासरक्तपित्तातिसारजित् ।

॥ औष्ट्रक्षीरगुणाः ॥

ईषद्रूक्षोष्णलवणमौष्ट्रकं दीपनं लघु ॥ ५
शस्तं वातकफानाहकृमिशोफोदरार्शसाम् ।

॥ नारीक्षीरगुणाः ॥

कषायानुरसं नारीक्षीरं वर्चोविभेदनम् ॥ ६
सन्निपातज्वरे पित्ते रक्ताग्निवृद्धिजेऽपि च ।

तृष्णादाहभ्रममदे नेत्रदाहे विशेषतः ॥ ७
अन्तर्दाहे प्रलापे च बाले वृद्धे कृशाङ्गके ।
पित्तभ्रमे चापस्मारे विशेषात्तत्प्रशस्यते ॥ ८

॥ नारीक्षीरप्रतिषेधः ॥

शीतज्वरेऽतिसारे च शूले च ग्रहणीगदे ।
पाण्डुरोगे प्रमेहे च शोषे मन्दानिलेऽरुचौ ॥ ९
प्रसेके च प्रतिश्याये क्रिमि[1]रोगे भगन्दरे ।
उदावर्ते विसूच्यां च स्तन्यपानं न शस्यते ॥ १०

॥ ज्वरे स्तन्यपानकालः ॥

द्वादशाहात् परं दाहतृष्णाभ्रमप्रपीडिते ।
ज्वरे श्रमक्लमयुते स्तन्यपानं प्रयोजयेत् ॥ ११

॥ स्तन्यप्रयोगप्रकाराः ॥

केवलं वा सरुद्राक्षं शर्करासहितं तु वा ।

---

1 बोगे

त्रिरात्रं पञ्चरात्रं च स्तन्यपानं प्रयोजयेत् ॥ १२
आममेव प्रयोक्तव्यं स्तन्यं दोषकृदन्यथा ।
शङ्खचूर्णसमायुक्तं स्तन्यं केवलमेव वा ॥ १३
सन्निपातज्वरे पूर्वं देयं संज्ञाप्रबोधनम् ।
रुद्राक्षं स्तन्यसंघृष्टं पाननस्याञ्जने हितम् ॥ १४
उन्मादे चित्तविभ्रंशे दाहे चैतत् प्रयोजयेत् ।

॥ हस्तिनीक्षीरम् ॥

हस्तिन्याः स्थैर्यकृत् क्षीरम्

॥ अविक्षीरगुणाः ॥

उष्णञ्चाहृद्य[1]माविकम् ॥ १५
वातव्याधिहरं हिध्माश्वासपित्तकफप्रदम् ।

॥ ऐकशफक्षीरगुणाः ॥

बाढमुष्णं चैकशफं पित्तश्लेष्मकरं लघु ॥ १६
शाखावातहरं साम्ललवणं जडताकरम् ।

॥ आमपक्वक्षीरगुणाः ॥

पयोऽभिष्यन्दि गुर्वामं युक्त्या [2]शृतमतोऽन्यथा ॥ १७
भवेद्गरीयोऽतिशृतं धारोष्णममृतोपमम् ।

॥ प्राभातिकपयोगुणाः ॥

रात्रौ सौम्यगुणत्वाच्च व्यायामाभावतस्तथा ॥ १८
[3]विशेषाद् गुरु विष्टम्भि शीतं प्राभातिकं पयः ।

॥ क्षीरविक्रियाकालः ॥

मुहूर्तपञ्चकातीतं क्षीरं प्राप्नोति विक्रियाम् ॥ १९

---

1. माविकम्  2. भित  3. प्रदोष

शृतं तद्द्विगुणात् कालादधिकत्वाद्विषोपमम् ।

॥ सद्यःस्नेहनक्षीरयोगः ॥

क्षीरं तु पीतं धारोष्णं शर्करामधुसंयुतम् ॥ २०
नराणां रूक्षदेहानां सद्यस्स्नेहनमुत्तमम् ।

॥ धारोष्णस्य हिताहितत्वम् ॥

धारोष्णं तु निषेव्यं स्याद् बलिभिर्दीप्तवह्निभिः ॥ २१
धारोष्णमहितं क्षीरमम्लोद्गाराग्निवैकृते ।
आध्मातकुक्षौ तरुणे ज्वरे वातप्रपीडिते ॥ २२

॥ गव्यादीनां अमृतोपमत्वे व्यवस्था ॥

धारोष्णममृतं गव्यं धाराशीतं तु माहिषम् ।
शृतशीतमजाक्षीरं शृतोष्णं चाविकं पयः ॥ २३
अनौषधं सौषधं वा पक्वं लघु भवेत् पयः ।

॥ सन्तानिकागुणाः ॥

रक्तपित्तानिलच्छर्दिमूर्च्छाहिक्कापहा सरा ॥ २४
दीपनी तर्पणी बल्या गुर्वी प्राणावलम्बिनी ।
स्वादुपाकरसा स्निग्धा वृष्या सन्तानिका वरा ॥ २५

॥ दधिगुणाः ॥

अम्लपाकरसं ग्राहि गुरूष्णं दधि वातजित् ।
मेदश्शुक्रबलश्लेष्मरक्तपित्ताग्निशोफकृत् ॥ २६
रोचिष्णु शस्तमरुचौ शीतके विषमज्वरे ।
पीनसे मूत्रकृच्छ्रे च रूक्षं तु ग्रहणीगदे ॥ २७

॥ दधिभक्षणनियमाः ॥

नैवाद्यान्निशि नैवोष्णं वसन्तोष्णशरत्सु न ।

नामुद्गसूपं नाक्षौद्रं न वाऽघृतसितोपलम् ॥ २८
न चानामलकं चापि नित्यं नो मन्दमन्यथा ।
ज्वरासृक्पित्तवीसर्पकुष्ठपाण्ड्वामयप्रदम् ॥ २९

॥ चातुर्जातचतुष्ककल्पना ॥

दधि रुच्यं हितं प्रोक्तं शशितक्रोत्थवासितम् ।
कपित्थमज्जमृद्वीकापरूषकसितायुतम् ॥ ३०
मरीचचूर्णसंयुक्तं दधि सैन्धवसंयुतम् ।
चातुर्जाताधिवासेन चातुर्जातचतुष्ककम् ॥ ३१
वातश्लेष्महरं वृष्यं स्निग्धं दीपनपाचनम् ।

॥ मनोज्ञदधिकल्पना ॥

कपित्थधात्रीपक्वाम्लरससंलिप्तभाजने ॥ ३२
पृथग्वा क्षीरमुषितं मनोज्ञं दधि जायते ।

॥ तक्रगुणाः ॥

तक्रं लघु कषायाम्लं दीपनं कफवातजित् ॥ ३३
[1]शोफोदरार्शोग्रहणीदोषकृच्छ्रज्वरारुचीः ।
गुल्मप्लीहघृतव्यापद्गरपाण्ड्वामयाञ्जयेत् ॥ ३४
पीनसश्वासकासादौ सिद्धमेवोपयोजयेत् ।
दोषघ्नमुद्धृतस्नेहं सस्नेहमपि शोफजित् ॥ ३५

॥ दोषभेदेन तक्रकल्पना ॥

वातेऽम्लं सैन्धवोपेतं स्वादु पित्ते सशर्करम् ।
हितं तक्रं कफे साम्लं व्योषसौवर्चलान्वितम् ॥ ३६

---

1. शोफोदरांश्च

॥ मस्तुगुणाः ॥

तद्वन्मस्तु[1]सरं स्रोतःशोधि विष्टम्भजिल्लघु ।

॥ नवनीतगुणाः ॥

नवनीतं नवं वृष्यं शीतं वर्णबलाग्निकृत् ॥ ३७
संग्राहि वातपित्तासृक्क्षयार्शोऽर्दितकासजित् ।
चक्षुष्यं बालवृद्धानां प्रशस्तं सौकुमार्यकृत् ॥ ३८
क्षीरोद्भवं तु संग्राहि रक्तपित्ताक्षिरोगजित् ।

॥ घृतगुणाः ॥

शस्तं धीस्मृतिमेधाग्निबलायुश्शुक्लचक्षुषाम् ॥ ३९
बालवृद्धप्रजाकान्तिसौकुमार्यस्वरार्थिनाम् ।
क्षतक्षीणपरीसर्पशस्त्राग्निग्लपितात्मनाम् ॥ ४०
वातपित्तविषोन्मादशोषालक्ष्मीज्वरापहम् ।
स्नेहानामुत्तमं शीतं वयसः स्थापनं घृतम् ॥ ४१
सहस्रवीर्यं विधिभिः श्रुतं कर्मसहस्रकृत् ।

॥ पुराणघृतगुणाः ॥

मदापस्मारमूर्च्छार्तिशिरःकर्णाक्षियोनिजान् ॥ ४२
पुराणं जयति व्याधीन् व्रणशोधनरोपणम् ।
पञ्चसंवत्सरातीतं पुराणं घृतमिष्यते ॥ ४३
यावत्कालं घृतं तावत् तस्य शक्तिर्विवर्धते ।

॥ किलाटादिगुणाः ॥

बल्याः किलाट[2]पीयूषकूचिका[3]मोरटादयः ॥ ४४
शुक्लनिद्राकफकरा विष्टम्भिगुरुदोषलाः ।

---

1. रसं 2. पीयूष 3. मोरट

॥ वरावरनिर्देशः ॥

गव्ये क्षीरघृते श्रेष्ठे निन्दिते चाविसंभवे ॥ ४५

॥ दधिविशेषाणां गुणनिर्देशः ॥

विद्याद्दधिघृतादीनां गुणान् साम्याद्यथापयः ।

॥ इति क्षीरवर्गः ॥

*　　*　　*

## ॥ अथेक्षुवर्गः ॥

॥ इक्षुरसगुणाः ॥

इक्षोः सरो गुरुः स्निग्धो बृंहणः कफमूत्रकृत् ॥ १
वृष्यः शीतोऽस्रपित्तघ्नः स्वादुपाकरसो रसः ।
सोऽग्रे सलवणो दन्तपीडितः शर्करासमः ॥ २

॥ यान्त्रिकदोषाः ॥

मूलाग्रजन्तुजग्धादिपीडनान्मलसंकरात् ।
किञ्चित्कालं विधृत्या च विकृतिं याति यान्त्रिकः ॥ ३
विदाही गुरुविष्टम्भी तेनासौ

॥ पौण्ड्रकादीनां गुणाः ॥

तत्र पौण्ड्रकः ।
शैत्यप्रसादमाधुर्या[1]द्वरस्तमनु वांशिकः ॥ ४
शातपर्वककान्तारनैपालाद्यास्ततः क्रमात् ।
सक्षाराः सकषायाश्च सोष्णाः किञ्चिद्विदाहिनः ॥ ५

॥ फाणितगुणाः ॥

फाणितं गुर्वभिष्यन्दि चयकृन्मूत्रशोधनम् ।

---

1. द्वरस्तवनु

॥ गुडगुणाः ॥

नातिश्लेष्मकरो धौतः सृष्टमूत्रशकृद् गुडः ॥ ६

प्रभूतक्रिमिमज्जासृङ्मेदोमांसकफोऽपरः ।

हृद्यः पुराणः पथ्यश्च नवः श्लेष्माग्निसादकृत् ॥ ७

॥ मत्स्यण्डिकादिगुणाः ॥

[1]वृष्याः क्षीणक्षतहिता रक्तपित्तानिलापहाः ।

मत्स्यण्डिकाखण्डसिताः क्रमेण गुणवत्तराः ॥ ८

॥ यासशर्करादिगुणाः ॥

तद्गुणा तिक्तमधुरा कषाया[2] यासशर्करा ।

दाहतृट्छर्दिमूर्छासृक्पित्तघ्न्यः सर्वशर्कराः ॥ ९

॥ इक्षुजानां वरावरे ॥

शर्करेक्षुविकाराणां फाणितं च वरावरे ।

※ ॥ मधुगुणाः ॥

चक्षुष्यं छेदि तृट्श्लेष्म[3]विषहिध्मास्रपित्तनुत् ॥ १०

कुष्ठमेहज्वरच्छर्दिश्वासकासातिसारजित् ।

व्रणशोधनसन्धानरोपणं वातलं मधु ॥ ११

रूक्षं कषायमधुरं तत्तुल्या मधुशर्करा ।

॥ उष्णोपचारनिषेधः ॥

उष्णमुष्णार्तमुष्णे च युक्तं चोष्णैर्निहन्ति तत् ॥ १२

॥ क्वचिदुष्णमध्वनुमतिः ॥

प्रच्छर्दने निरूहे च मधूष्णं न निवार्यते ।

अलब्धपाकमेवाशु तयोर्यस्मान्निवर्तते ॥ १३

॥ इतीक्षुवर्गः ॥

*　　*　　*

---

1. पुष्पा　　2. वाप

※ शर्कराप्रसङ्गान्मधुगुणाः कीर्त्यन्ते ॥　　3. विह

## ॥ अथ तैलवर्गः ॥

### ॥ तिलतैलगुणाः ॥

तैलं स्वयोनिवत्तत्र मुख्यं तीक्ष्णं व्यवायि च ।
त्वग्दोषकृदचक्षुष्यं सूक्ष्मोष्णं कफकृन्न च ॥ १
कृशानां बृंहणायालं स्थूलानां कर्शनाय च ।
बद्धविट्कं क्रिमिघ्नं च संस्कारात् सर्वदोषजित् ॥ २

### ॥ कृशानां बृंहणत्वे युक्तिः ॥

वातादिदोषसंरोधात् स्रोतसां रसवाहिनाम् ।
आहारजन्मान्नरसो रसादीन्नाप्नुयादतः ॥ ३
कृशो भवति तस्यैतद् तैलं स्रोतोविशोधनम् ।
तीक्ष्णादिगुणयोगेन ततःस्रोतोविशोधनात् ॥ ४
प्रपद्यते रसो धातूनतः पुष्टिर्भविष्यति ।

### ॥ ऐरण्डतैलगुणाः ॥

सतिक्तोषणमैरण्डं तैलं स्वादु सरं गुरु ॥ ५
वर्ध्मगुल्मानिलकफानुदरं विषमज्वरान् ।
रुक्शोफौ च कटीगुह्यकोष्ठपृष्ठाश्रयौ जयेत् ॥ ६
तीक्ष्णोष्ण पिच्छिलं विस्रं रक्तैरण्डोद्भवं त्वति ।

### ॥ सार्षपतैलगुणाः ॥

कट्वुष्णं सार्षपं तीक्ष्णं कफशुक्रानिलापहम् ॥ ७
लघु पित्तास्रकृ[1]त्कोठकुष्ठार्शोव्रणजन्तुजित् ।

### ॥ आक्षतैलगुणाः ॥

आक्षं स्वादु हिमं केश्यं गुरु पित्तानिलापहम् ॥ ८

---

1. कोठ.

॥ निम्बतैलगुणाः ॥

नात्युष्णं निम्बजं तिक्तं क्रिमिकुष्ठकफप्रणुत् ।

उमाकुसुम्भतैलगुणाः ॥

उमाकुसुम्भजं चोष्णं त्वग्दोषकफपित्तकृत् ॥ ९

॥ तैलेषु वरावरे ॥

तिलतैलं वरं तेषु कौसुम्भमवरं मतम् ।

॥ वसाऽऽदीनां गुणाः ॥

वसा मज्जा च वातघ्नौ कफपित्तबलप्रदौ ॥ १०
मांसानुगस्वरूपौ च विद्यान्मेदोऽपि ताविव ।

इति तैलवर्गः ॥

* * *

॥ अथ मद्यवर्गः ॥

दीपनं रोचनं मद्यं तीक्ष्णोष्णं तुष्टिपुष्टिदम् ।
[1]सस्वादुतिक्तकटुकमम्लपाकरसं सरम् ॥ १
सकषायं स्वरारोग्यप्रतिभावर्णकृल्लघु ।
नष्टनिद्रातिनिद्रेभ्यो हितं पित्तास्रदूषणम् ॥ २
कृशस्थूलहितं रूक्षं सूक्ष्मं स्रोतोविशोधनम् ।
वातश्लेष्महरं युक्त्या पीतं विषवदन्यथा ॥ ३
गुरु [2]तद् दोषजननं नवं जीर्णमतोऽन्यथा ।

॥ मद्यपाननियमाः ॥

पेयं नोष्णोपचारेण न विरिक्तक्षुधातुरैः ॥ ४
नात्यर्थतीक्ष्णमृद्वल्पसंभारं कलुषं न च ।

---

1. नस्वाद्व. 2. त्वच.

॥ सुरागुणाः ॥

गुल्मोदरार्शोग्रहणीशोफकृत् स्नेहनी गुरुः ॥ ५

सुराऽनिलघ्नी मेदोऽसृक्स्तन्यमूत्रकफावहा ।

॥ वारुण्यादिगुणाः ॥

तद्गुणा वारुणी ज्ञेया पथ्या वैभीतकी सुरा ॥ ६

॥ अरिष्टगुणाः ॥

यथाद्रव्यगुणोऽरिष्टः सर्वमद्यगुणाधिकः ।

॥ मार्द्वीकादिगुणाः ॥

मार्द्वीकखार्जूरकृतौ नातिपित्तानिलौ मतौ ॥ ७

शार्करः सुरभिः स्वादुहृद्यो नातिमदो लघुः ।

सृष्टमूत्रशकृद्वातो गौडस्तर्पणदीपनः ॥ ८

वातपित्तकरः शीधुः स्नेहश्लेष्मविकारहा ।

तीक्ष्णो मध्वासवो ज्ञेयः शुक्तं वातानुलोमनम् ॥ ९

गुडेक्षुमद्यमार्द्वीक[1]शुक्तं लघु यथोत्तरम् ।

कन्दमूलफलाद्यांश्च तद्वद्विद्यात्तदासुतान् ॥ १०

चाण्डाकी चासुतं चान्यत् कोलाम्लं रोचनं लघु ।

॥ धान्याम्लगुणाः ॥

धान्याम्लं भेदि तीक्ष्णोष्णं पित्तकृत् स्पर्शशीतलम् ॥ ११

श्रमक्लमहरं रुच्यं दीपनं बस्तिशूलनुत् ।

शस्तमास्थापने हृद्यं लघु वातकफापहम् ॥ १२

॥ सौवीरकतुषोदकगुणाः ॥

एभिरेव गुणैर्युक्ते सौवीरक[2]तुषोदके ।

---

1. शुक्त.        2. कुदोषके.

क्रिमिहृद्रोगगुल्मार्शःपाण्डुरोगनिबर्हणे ॥ १३
ते क्रमाद्वितुषैर्विद्यात् सतुषैश्च यवैः कृते ।

*॥ मूत्रगुणाः ॥

मूत्रं गोऽजाविमहिषगजाश्वोष्ट्रखरोद्भवम् ॥ १४
पित्तकृद्रूक्षतीक्ष्णोष्णं लवणा[1]नुरसं कटु ।
[2]क्रुमिदोषोदरानाह[3]शूलपाण्डुकफानिलान् ॥ १५
गुल्मारुचिविषश्वित्रकुष्ठार्शांसि जयेल्लघु ।

## इति मद्यवर्गः

॥ अध्यायार्थसङ्ग्रहः ॥

तोयक्षीरेक्षुतैलानां वर्गैर्मद्यस्य च क्रमात् ॥ १६
इति द्रवैकदेशोऽयं यथास्थूलमुदाहृतः ।

इति श्रीश्रीनिवासपण्डितविरचिते चिकित्सातिलके सूत्रस्थाने द्रवद्रव्यविज्ञानीयो नाम पञ्चदशोऽध्यायः ॥

---

* तीक्ष्णोष्णादिप्रसङ्गात् मूत्रगुणाः कीर्त्यन्ते

1. सरं 2. क्रमात्दोषो 3. क्रिमि.

## ॥ अथ षोडशोऽध्यायः ॥

॥ अथातोऽन्नविज्ञानीयं व्याख्यास्यामः ॥

॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥

### ॥ शूकधान्यवर्गः ॥

#### ॥ तत्रादौ शालिगुणाः ॥

रक्तो महान् सकलमस्तूर्णकः शकुनाहृतः ।
सारामुखो दीर्घशूको लोध्रशूकः सुगन्धिकः ॥ १
पतङ्गास्तपनीयाश्च ये चान्ये शालयः शुभाः ।
स्वादुपाकरसाः स्निग्धा वृष्या बद्धाल्पवर्चसः ॥ २
कषायानुरसाः पथ्या लघवो मूत्रला हिमाः ।

#### ॥ रक्तशाल्यादीनां विशेषगुणाः ॥

शूकजेषु वरस्तत्र रक्तस्तृष्णात्रिदोषहा ॥ ३
महांस्तस्यानु कलमस्तच्चाप्यनु ततः परम् ।
यवका हायनाः पांसुवाप्यनैषधकादयः ॥ ४
स्वादूष्णा गुरवः स्निग्धाः पाकेऽम्लाः श्लेष्मपित्तलाः ।
सृष्टमूत्रपुरीषाश्च पूर्वं पूर्वं च निन्दिताः ॥ ५

#### ॥ व्रीहिषु षष्टिकगुणाः ॥

स्निग्धो ग्राही लघुः स्वादुस्त्रिदोषघ्नः स्थिरो हिमः ।
षष्टिको व्रीहिषु श्रेष्ठो गौरश्चासितगौरतः ॥ ६

#### ॥ महाव्रीह्यादिगुणाः ॥

ततः क्रमान्महाव्रीहिकृष्णव्रीहिजतूमुखाः ।
कुक्कुटाण्डकलापाख्यपारावतकसूकराः ॥ ७

वरकोद्दालकोज्ज्वाल[1]चीनशारददर्दुराः ।
गन्धनाः कुरुविन्दाश्च गुणैरल्पान्तरा मताः ॥ ८

॥ पाटलगुणाः ॥

स्वादुरम्लविपाकोऽन्यो व्रीहिः पित्तकरो गुरुः ।
बहुमूत्रपुरीषोष्मा त्रिदोष[2]स्त्वेव पाटलः ॥ ९

॥ तृणधान्यसामान्यगुणाः ॥

कङ्गुकोद्रवनीवारश्यामाकादि हिमं लघु ।
तृणधान्यं पवनकृल्लेखनं कफपित्तकृत् ॥ १०

॥ प्रियङ्गुकोरदूषयोर्विशेषगुणाः ॥

भग्नसन्धानकृत्तत्र प्रियङ्गुर्बृंहणी गुरुः ।
कोरदोषः[3]परं ग्राही स्पर्शशीतो विषापहः ॥ ११

॥ यवानुयवादिगुणाः ॥

रूक्षः[4]शीतो गुरुः स्वादुः सरो विड्वातकृद्यवः ।
वृष्यः स्थैर्यकरो मूत्रमेदःपित्तकफाञ्जयेत् ॥ १२
पीनसश्वासकासोरुस्तम्भ[5]कण्ठत्वगामयान् ।
न्यूनो यवादनुयवो रूक्षोष्णो [6]वंशजो यवः ॥ १३

॥ गोधूमगुणाः ॥

वृष्यः शीतो गुरुः स्निग्धो जीवनो वातपित्तहा ।
सन्धानकारी मधुरो गोधूमः स्थैर्यकृत् सरः ॥ १४
पथ्या नन्दीमुखी शीता कषायमधुरा लघुः ।

॥ इति शूकधान्यवर्गः ॥

* * *

1. चिन 2. स्त्वेद् 3. स्तुरं.
4. स्नोतो 5. कर्ण 6. वंशजे

## ॥ अथ शिम्बीधान्यवर्गः ॥

### ॥ शिम्बीधान्यसामान्यगुणाः ॥

कषायस्वादुलघवो विबन्धाध्मानकारिणः ।
रूक्षा बद्धमलाः शीताः कटुपाकात्मकास्तथा ॥ १
विष्टम्भिनो वातकराः सर्वे स्युः शिम्बिसंभवाः ।
मेदःश्लेष्मास्रपित्तेषु हिता लेपोपसेकयोः ॥ २

### ॥ मुद्गादीनां विशेषगुणाः ॥

वरोऽत्र मुद्गोऽल्पचलः कलायस्त्वतिवातलः ।
राजमाषोऽनिलकरो रूक्षो बहुशकृद्गुरुः ॥ ३
आढकी मधुरा रूक्षा कषाया कफपित्तहृत् ।

### ॥ कुलत्थगुणाः ॥

उष्णाः कुलत्थाः पाकेऽम्लाः शुक्राश्मश्वासपीनसान् ॥ ४
कासार्शःकफवातांश्च घ्नन्ति पित्तास्रलाः परम् ।

### ॥ चणकगुणाः ॥

चणकः कफपित्तास्रहन्ता बृंहणको गुरुः ॥ ५

### ॥ निष्पावगुणाः ॥

निष्पावो वातपित्तास्रक्स्तन्यमूत्रकरो गुरुः ।
सरो विदाही दृक्शुक्रकफशोफविषापहः ॥ ६

### ॥ माषकाकाण्डोलात्मगुप्तागुणाः ॥

माषः स्निग्धो बलश्लेष्ममलपित्तकरः सरः ।
गुरूष्णोऽनिलहा स्वादुः शुक्रवृद्धिविरेककृत् ॥ ७
फलानि माषवद्विद्यात् काकाण्डोलात्मगुप्तयोः

॥ तिलगुणाः ॥

उष्णस्त्वच्यो हिमस्पर्शः केश्यो बल्यस्तिलो गुरुः ॥ ८
अल्पमूत्रः कटुः पाके मेधाग्निकफपित्तकृत् ।

॥ उमाकुसुम्भगुणाः ॥

स्निग्धोमा स्वादुतिक्तोष्णा कफपित्तकरी गुरुः ॥ ९
दृक्शुक्रहृत् कटुः पाके तद्वद् बीजं कुसुम्भजम् ।

॥ शिम्बीशूकजेष्ववरौ ॥

माषोऽत्र सर्वेष्ववरो यवकः शूकजेषु च ॥ १०

॥ धान्यस्य गुरुलाघवम् ॥

नवं धान्यमभिष्यन्दि लघु संवत्सरोषितम् ।
वर्षस्थितं सर्वमन्नं परित्यजति गौरवम् ॥ ११
न तु त्यजति तद्वीर्यं लघुत्वमुपपद्यते ।
शीघ्रजन्म तथा सूप्यं निस्तुषं युक्तिभर्जितम् ॥ १२

॥ गुरुलाघवनिर्णयः ॥

अन्नपानविधावुक्तं यद् द्रव्ये गुरुलाघवम् ।
वह्निनैव विजानीयात् पचनात्तच्चिराचिरात् ॥ १३

इति शिम्बीधान्यवर्गः ॥

* * *

॥ अथ पक्वान्नवर्गः ॥

मण्डपेयाविलेपीनामोदनस्य च लाघवम् ।
यथापूर्वं

॥ मण्डगुणाः ॥

शिवस्तत्र मण्डो वातानुलोमनः ॥ १

तृड्ग्लानिदोषशोषघ्नः पाचनो धातुसाम्यकृत् ।
स्रोतोमार्दवकृत् स्वेदी सन्धुक्षयति चानलम् ॥ २

॥ पेयागुणाः ॥

क्षुत्तृष्णाग्लानिदौर्बल्यकुक्षिरोगज्वरापहा ।
मलानुलोमनी पथ्या पेया दीपनपाचिनी ॥ ३

॥ विलेपीगुणाः ॥

विलेपी ग्राहिणी हृद्या तृष्णाघ्नी दीपनी हिता ।
व्रणाक्षिरोगसंशुद्धदुर्बलस्नेहपायिनाम् ॥ ४

॥ ओदनगुणाः ॥

सुधौतः प्रस्रुतः स्विन्नोऽत्यक्तोष्मा चौदनो लघुः ।

॥ गुरुलाघवकल्पना ॥

*यश्चाग्नेयौषधक्वाथसाधितो भृष्टतण्डुलः ॥ ५
विपरीतो गुरुः क्षीरमांसाद्यैर्यश्च साधितः ।
इति द्रव्यक्रियायोगमानाद्यैः सर्वमादिशेत् ॥ ६

॥ रसानां गुणाः ॥

बृंहणः प्रीणनो वृष्यश्चक्षुष्यो व्रणहा रसः ।
मौद्गस्तु पथ्यः संशुद्धव्रणकण्ठाक्षिरोगिणाम् ॥ ७
वातानुलोमी [1]कौलत्थो गुल्मतूनीप्रतूनिजित् ।

॥ रसालालक्षणं गुणाश्च ॥

रसाला बृंहणी वृष्या स्निग्धा बल्या रुचिप्रदा ॥ ८
स्वजेन मथितां पादशर्करां दधिसंयुतां ।
शुण्ठीजीरकसिन्धूत्थै रसालां मार्जितां विदुः ॥ ९

---

* लघुरिति शेषः । 1. कावन्थो

॥ पानकगुणाः ॥

श्रमक्षुत्तृट्क्लमहरं पानकं प्रीणनं गुरु ।
विष्टम्भि मूत्रलं हृद्यं यथाद्रव्यगुणं च तत् ॥ १०

॥ पञ्चसारपानकम् ॥

द्राक्षामधूकखर्जूरकाश्मर्यैः सपरूषकैः ।
तुल्यांशैः कल्पितं पूतं शीतं कर्पूरवासितम् ॥ ११
पानकं पञ्चसाराख्यं दाहतृष्णानिवर्तकम् ।

॥ अष्टसारम् ॥

तदेव शर्करायुक्तं दाडिमाम्लैश्च संयुतम् ॥ १२
युक्त्या माक्षिकसंमिश्रमष्टसारमुदाहृतम् ।

॥ अन्यत् पञ्चसारम् ॥

क्षीरं स्यात् पिप्पलीक्षौद्रशर्कराघृतसंयुतम् ॥ १३
पानकं पञ्चसाराख्यं वातपित्तहरं परम् ।

॥ माषसूपः ॥

प्रभूताभ्यन्तरमलो माषसूपः परं स्मृतः ॥ १४

॥ यूषादिशाकान्तानां गुणविशेषाः ॥

विद्याद्यूषे रसे सूपे शाके चैवोत्तरोत्तरम् ।
गौरवं ; तनुसान्द्राम्लस्वादुत्वं तु पृथक् तथा ॥ १५

॥ लाजगुणाः ॥

लाजास्तृट्छर्दतीसारकासमेहज्वरच्छिदः ।
श्वासपित्तोपशमना लघवो दीपना हिमाः ॥ १६

॥ पृथुकधानागुणाः ॥

पृथुका गुरवो बल्या। कफविष्टम्भकारिणः ।
धाना विष्टम्भिनी रूक्षा तर्पणी लेखनी गुरुः ॥ १७

॥ सक्तुगुणाः ॥

सक्तवो लघवः क्षुत्तृट्श्रमनेत्रामयव्रणान् ।
घ्नन्ति सन्तर्पणाः पानात् सद्य एव बलप्रदाः ॥ १८

॥ सक्तूपयोगे नियमाः ॥

नोदकान्तरितान्न द्विर्न निशायां न केवलान् ।
न भुक्त्वा न द्विजैश्छित्त्वा सक्तूनद्यान्न वा बहून् ॥ १९

॥ पिण्याकगुणाः ॥

पिण्याको ग्लपनो रूक्षो विष्टम्भी दृष्टिदूषणः ।

॥ वेशवारगुणाः ॥

वेशवारो गुरुः स्निग्धो बलोपचयवर्धनः ॥ २०

॥ वेशवारकल्पनम् ॥

मांसं सुकुट्टितं सूक्ष्मं रञ्जीभूतं सुभर्जितम् ।
घृतेन हिङ्गुमरिचधान्यजीरकचूर्णवत् ॥ २१
वेशवारत्वमाप्नोति मुद्गमाषादिजास्तथा ।
मुद्गादिजास्तु गुरवो यथाद्रव्यगुणानुगाः ॥ २२

॥ कुकूलादिपक्वापूपगुणाः ॥

कुकूलखर्परभ्राष्ट्रकन्द्वङ्गारविपाचितान् ।
एकयोनींल्लघून् विद्यादपूपानुत्तरोत्तरम् ॥ २३

॥ रागषाडवौ ॥

द्राक्षाक्वाथः शालिसक्तुप्रपन्नः
क्षौद्रप्रायः शर्करावांशिमिश्रः ।
गौलांशाढ्यः सत्रिजातः सधान्यो
रागो ज्ञेयः षाडवो दाडिमाम्लः ॥ २४
स्यादेवायं षाडवो दाडिमाम्लो
लेह्यः पूतो वा भवेद्द्राक्षपूतः ।

पक्वापक्वौ वातपित्ते हतस्तौ
रुच्यौ वृष्यौ बृंहणौ ग्राहिणौ च ॥ २५

॥ इति कृतान्नवर्गः ॥

*　　*　　*

## ॥ अथ मांसवर्गः ॥

### ॥ मृगाः ॥

हरिणैणकुरङ्गर्क्षगोकर्णमृगमातृकाः ।
शशशम्बरचारुष्कशरभाद्या मृगाः स्मृताः ॥ १

### ॥ विष्किराः ॥

लाववार्तिकवर्तीर[1]रक्तवर्त्मककुक्कुभाः ।
कपिञ्जलोपचक्राह्वचकोरकुरुवाह्वः ॥ २
वर्तको वर्तिका चैव तित्तिरिः [2]क्रकरः शिखी ।
ताम्रचूडाख्यवरकगोनर्दगिरिवर्तिकाः ॥ ३
तथा शारपदेन्द्राह्ववराटाश्चेति [3]विष्किराः ।
लावादयो वराटान्ता विष्किरा एकविंशतिः ॥ ४
विकीर्य भक्षणात्पक्ष्यां विष्किराः शक्रनिर्मिताः ।

### ॥ प्रतुदाः ॥

जीवंजीवकदात्यूहभृङ्गाश्च शुकशारिकाः ॥ ५
लट्वकोकिलहारीतकपोतचटकादयः ।
जीवंजीवकमारभ्य चटकान्ता दश स्मृताः ॥ ६
प्रतुदास्तुन्दकुट्टेन [4]प्रतुद्याशनकारिणः ।
जटाविचीरको लोहपृष्ठाको यष्टिदुन्दुमी ॥ ७

---

1. तित्तिरीक्रकराशिखी　　2. कुक्कुभ
3. विट्करा　　4. कुण्टेन

आदिशब्दावरुद्धाः स्युः स्वञ्जरीटादयो द्विजाः ।
[1]प्रतुदाः

॥ विलेशयाः ॥

मेकगोधाहिश्वाविदाद्या बिलेशयाः ॥ ८

चत्वारो मेकगोधाहिश्वाविदाख्या बिलेशयाः ।
बलिमूवृक्षविवरे शयनात्तेऽम्बरेशयाः ॥ ९

॥ प्रसहाः ॥

गोखराश्वतरोष्ट्राश्च द्वीपिसिंहर्क्षवानराः ।
मार्जारमूषिकव्याघ्रवृकबभ्रुतरक्षवः ॥ १०
लोपाकजम्बुकश्येनचाषवान्तादवायसाः ।
शशघ्नीभासकुररगृध्रोलूककुलिङ्गकाः ॥ ११
धूमिका मधुहा चेति प्रसहा मृगपक्षिणः ।
श्वेतः श्यामः स्निग्धपृष्ठः शल्यकः कदळीमृगः ॥ १२
एकोनत्रिंशदेते स्युः प्रसहा गोखरादयः ।
प्रसह्य बलतः सर्वे भक्षयन्तीति कारणात् ॥ १३
प्रसहा नामतः केचिन्मृगाः केचन पक्षिणः ।

॥ महामृगाः ॥

वराहमहिषन्यङ्कुरुरुरोहितवारणाः ॥ १४
अमरश्चमरः खड्गो गवयश्च महामृगाः ।
वराहाद्या दश प्रोक्ता गवयान्ता महामृगाः ॥ १५

॥ अप्चराः ॥

हंससारसकारण्डवकक्कादम्बकप्लवाः ।
बलाकोत्कोशचक्राह्वमद्गुक्रौञ्चादयोऽप्चराः ॥ १६

---

1. प्रतुदाः

हंसाद्याः क्रौञ्चपर्यन्ता दशैकश्च पयश्चराः ।
आदिशब्दगृहीताः स्युः शरारिमणितुण्डके ॥ १७
पुण्डरीकाक्षनन्द्यास्यौ मल्लिकाद्याश्च पक्षिणः ।

॥ मत्स्याः ॥

मत्स्या रोहितपाठीनकूर्मकुम्भीरकर्कटाः ॥ १८
[1]शुक्तिशङ्खोन्द्रशम्बूकशफरीपञ्चचन्द्रिकाः ।
[2]चुलुकीनक्रमकरशिशुमारतिमिङ्गिलाः ॥ १९
राजीचिलिचिमाद्याश्च मांसमित्याहुरष्टधा ।
एकोनविंशतिर्मत्स्या रोहिताद्या जलोद्भवाः ॥ २०
पाण्डुश्चित्राङ्गदश्चित्रपदगश्चादिशब्दगाः ।
इत्यनेन प्रकारेण मांसमष्टविधं जगुः ॥ २१

॥ अजाव्योरनिश्चितयोनित्वम् ॥

योनिष्वजावी व्यामिश्रगोचरत्वादनिश्चिते ।

॥ जाङ्गलादिभेदेन मांसगणना ॥

आद्यान्त्या जाङ्गलानूपा मध्यौ साधारणौ स्मृतौ ॥ २२
मृगाः सविष्किरा ज्ञेयाः[3] प्रतुदाश्चापि जाङ्गलाः ।
महामृगा वारिचरा मत्स्याश्चानूपसंज्ञिताः ॥ २३
साधारणावुभौ वर्गौ देशद्वयविचारिणौ ।
बिलेशयाख्यप्रसहौ स्मृतौ मिश्रगुणान्वितौ ॥ २४

॥ जाङ्गलानां सामान्यगुणाः ॥

तत्र बद्धमलाः शीता लघवो जाङ्गला हिताः ।
पित्तोत्तरे वातमध्ये सन्निपाते कफानुगे ॥ २५

---

1. भक्तिशाखाम्बु  2. चुलुकी  3. प्रकृदा

॥ शशादीनां विशेषगुणाः ॥

दीपनः कटुकः पाके ग्राही रूक्षो हिमः शशः
ईषदुष्णगुरुस्निग्धा बृंहणा वर्तकादयः ॥ २६

॥ तित्तिरिगुणाः ॥

तित्तिरिस्तेष्वपि वरो मेधाग्निबलशुक्रकृत
ग्राही बल्योऽनिलोद्रिक्तसन्निपातहरः सरः ॥ २७

॥ मयूरगुणाः ॥

धन्वानूपविचारित्वात् स्निग्धोष्णो गुरुबृंहणः ।
नातिपथ्यः शिखी पथ्यः श्रोत्रस्वरवयोदृशाम् ॥ २८

॥ कुक्कुटादिगुणाः ॥

तद्वच्च कुक्कुटो [1]वृष्यो ग्राम्यस्तु श्लेष्मलो गुरुः ।
मेधानलकरा हृद्याः क्रकराः सोपचक्रकाः ॥ २९
गुरुः सलवणः [2]काणः कपोतः सर्वदोषकृत् ।
चटकाः श्लेष्मलाः स्निग्धा वातघ्नाः शुक्रलाः परम् ॥ ३०

॥ बिलेशयादीनां गुणाः ॥

गुरूष्णस्निग्धमधुरा वर्गाश्चातो यथोत्तरम् ।
मूत्रशुक्रकृतो बल्या वातघ्नाः कफपित्तलाः ॥ ३१
शीता महामृगास्तेषु क्रव्यादाः प्रसहाः पुनः ।
लवणानुरसाः पाके कटुका मांसवर्धनाः ॥ ३२

॥ अजगुणाः ॥

नातिशीतं गुरु स्निग्धं मांसमाजमदोषलम् ।
शरीरधातुसामान्यादनभिष्यन्दि बृंहणम् ।

॥ अविगुणाः ॥

विपरीतमतो ज्ञेयमाविकं बृंहणं तु तत् ॥ ३३

---

1. ग्राह्यो 2. काकः

॥ गोमांसगुणाः ॥

शुष्ककासश्रमात्यग्निविषमज्वरपीनसान् ।
कार्श्यं केवलवातांश्च गोमांसं सन्नियच्छति ॥ ३४

॥ निन्दितमांसानि ॥

गोखराश्वोष्ट्रमहिषसृगालश्वादिजं पलम् ।
निन्दितं धर्मशास्त्रज्ञैर्गोमांसमतिगर्हितम् ॥ ३५

॥ महिषादिगुणाः ॥

उष्णो गरीयान् महिषः स्वप्नदार्ढ्यबृहत्त्वकृत् ।
तद्वद्वराहः श्रमहा रुचिशुक्रबलप्रदः ॥ ३६
कफपित्तकरा मत्स्याः परं पवननाशनाः ।
मत्स्याः परं कफकराश्चिलीचीमस्त्रिदोषकृत् ॥ ३७

॥ लावादीनां वर्गवरत्वम् ॥

लावरोहितगोधैणाः स्वे स्वे वर्गे वराः परम् ।

*॥ सेव्यत्याज्यमांसानि ॥

मांसं सद्योहतं शुद्धं वयःस्थं च भजेत् त्यजेत् ॥ ३८
मृतं कृशं भृशं मेद्यं व्याधिवारिविषैर्हतम् ।

॥ मांसमेदानां गुरुलाघवविचारः ॥

पुंस्त्रियोः पूर्वपश्चार्धे गुरुणी गर्भिणी गुरुणी गुरुः ॥ ३९

---

* (एणः कुरङ्गो हरिणः शशो लावः कपिञ्जलः ॥
तित्तिरिः करणोवाश्च विट्गृध्रो मृगाधिपः ।
बर्हिणस्सारिका न्यङ्कुर्हंसोच्छपौ ॥
वल्मीकाद्याः स्ववर्गेषु प्रवरास्तेषु विस्तृताः ।
कावैणगोधाहंसाश्च निन्दितो गोस्सदर्दुरः ॥
ऋक्ष्यः काको [मूष] कपोतश्च सेवमुक्तं यथाक्रमम् । (इत्याधिकः पाठः ।)

लघुर्योषिच्चतुष्पात्सु विहगेषु पुनः पुमान् ।
शिरःस्कन्धोरुपृष्ठस्य कट्याः सक्थ्नोश्च गौरवम् ॥ ४०
तथाऽऽमपक्वाशययोर्यथापूर्वं विनिर्दिशेत् ।
शोणितप्रभृतीनां च धातूनामुत्तरोत्तरम् ॥ ४१
मांसाद्गरीयो वृषणमेढ्रवृक्कयकृद्गुदम् ।

॥ इति मांसवर्गः ॥

* * *

## ॥ अथोद्यानवर्गः ॥

फलकर्माञ्जसा वच्मि भूरुहामागमोदितम् ।

### ॥ उद्याननिर्माणम् ॥

मृदुमांसलविस्तीर्णे स्निग्धे स्वादुजलान्विते ॥ १
प्रदेशे सुसमे कुर्यादुद्यानं भिषगुत्तमः ।
व्युप्तांस्तत्र तिलान् माषान् दृष्ट्वा पुष्पफलान्वितान् ॥ २
उद्धृत्य भूरुहां स्थानमन्तरालं च कल्पयेत् ।
विशालैन्द्रैशहस्ते स्याज्ज्येष्ठमध्याधमाधमम् ॥ ३

### ॥ बीजकल्पना ॥

निजकालवशात् पक्वमदोषं रविरश्मिभिः ।
शोषितं यच्चिरात्तच्च गोमयेन विलेपितम् ॥ ४
विलङ्घनधूपेन धूपितं दशवासरम् ।
दुग्धेन भावितं शुष्कं बृहतीतिलयोरथ ॥ ५
नाल्मसविलिप्तं तज्जायतेऽतिमनोहरम् ।
गोविष्ठाभिन्नमध्यस्थं बीजं क्षीरमहीरुहाम् ॥ ६
एवं सुसंस्कृतानेकबीजसंजातभूरुहः ।
जायन्ते बृहदारम्भाः पत्रपुष्पफलान्विताः ॥ ७

॥ वृक्षवापविधिः ॥

कोदण्डार्धमिते खाते वालुकारिषभस्मभिः।
मृदा च पूरिते प्रेतवसामांसेन सेचिते ॥ ८
वापिताः स्युर्महावृक्षा नीरोगा मञ्जरीचिताः।

॥ लूताद्युपहतिकालः ॥

अपि लूतादिभिर्वृक्षाः शिशिरे दिवसान्तरे ॥ ९
शीर्यन्ते प्रथमे यामे ग्रीष्मकाले दिने दिने।
प्रथमे पश्चिमे यामे वर्षाकाले तथा घने ॥ १०

॥ वृक्षसेचनकालः ॥

शुष्कतापं समुत्तीर्य प्रक्षिपेद्विमलं जलम्।
विव्रणा रक्षिताः सिक्ताः स्नपिता अपि वेगतः ॥ ११
नत्यहं वर्धमानास्ते लभन्ते महतीं श्रियम्।

॥ निशादिधूपः ॥

निशाविलङ्गसिद्धार्थशशरोहितमांसजः ॥ १२
समृद्धिं फलपुष्पाणां कुर्याद्धूपोऽथ रोगहृत्।

॥ लुलायशृङ्गादिधूपः ॥

लुलायशृङ्गसिद्धार्थवचाहिङ्गुविलङ्गयुक् ॥ १३
पारावतमलं तद्वद् भल्लातं गोजलान्वितम्।
एतैः क्रिमिहरो धूपो भूरुहां मरिचैः समम् ॥ १४

॥ प्रोक्षणादियोगाः ॥

कटुतुम्बीफलमोचापत्रसिद्धार्थचूर्णयुक्।
प्रोक्षणं ; धूपिता वृक्षाः सिद्धाः स्युः कुसुमान्विताः ॥ १५
अङ्कोलवारिणा सिक्ता मधुना वा कषायतः।
वराहमेदसा नित्यं पत्रपुष्पफलान्विताः ॥ १६

रसवीर्यान्विताः स्निग्धा जायन्ते तरवो भृशम् ।
सुनम्राः फलभारेण संभवन्ति मनोहराः ॥ १७

॥ सरलपोषणयोगः ॥

*स्मरबीजफलाङ्कोलजलसिक्तजटालताः ।
फलपुष्पभवां शोभां वहन्ति सरला घनाः ॥ १८

॥ लतापोषणम् ॥

अलिकण्टकसंविद्धा मूर्ध्नि गव्याज्यधूपिताः ।
वीर्याढ्या मेदसा लिप्ताः फलन्ति सततं लताः ॥ १९

॥ द्राक्षापोषणम् ॥

कुक्कुटस्य मलाकीर्णलता मीनपलम्भसा ।
सिक्ताः स्युः सरसोद्दामफला द्राक्षा मनोहराः ॥ २०

॥ दाडिमपोषणम् ॥

गजैणकोलमार्जालचाषमांसरसान्वितैः ।
दुग्धैः सिक्तफला नम्रा दाडिमा बहुला भवेत् ॥ २१
शृगालमांसचूर्णाक्तं तत्केशामिषधूपितम् ।
दाडिमं फलसंपत्तिं महतीं लभतेतराम् ॥ २२

॥ मातुलुङ्गीपोषणम् ॥

कीटमीनाखुमांसाम्भस्तिलचूर्णजलोक्षिता ।
मातुलुङ्गी भवत्येव लतिकाफलबन्धुरा ॥ २३

॥ बीजपूरपोषणम् ॥

शृगालमांसखण्डेषु मूले दत्तेषु वेगतः ।
बीजपूरः [1]फलेद् दुग्धगुडमांसजलोक्षितः ॥ २४

---

*स्मरः = अशोकः 1. फले

॥ सारङ्गीपोषणम् ॥

विलङ्गतिलसिद्धार्थमाषोमादुग्धसेचिता ।
सारङ्गी शृङ्गमांसेन लेपिता धूपिता फलेत् ॥ २५

॥ कपित्थपोषणम् ॥

पक्वाङ्कोलफलक्रोड[1]वसाज्यमधुसेचिताः ।
[2]वातव्याधिविनिर्मुक्ताः फलन्ति किल सर्वदा ॥ २६
सर्पिर्मधुगुडक्षीरफाणितैः सेचिता द्रुमाः ।
कपित्थाः श्रीफलस्निग्धाः फलन्त्यसमये बहु ॥ २७

॥ बदरीपोषणम् ॥

मधूकतिलचूर्णाम्भोमधुभिः[3] कृतसेचनाः ।
बदर्यः सरळोद्दामफलास्त्वसमये ध्रुवम् ॥ २८

॥ केतकीपोषणम् ॥

[4]पलदुग्धाम्बुसेकेन जायते केतकीवनम् ।
सततं पुष्पसूचीभिर्युक्तं षट्पदमोहनम् ॥ २९

॥ चम्पकपोषणम् ॥

तिलस्यन्दकणागुञ्जाश्यामासिद्धार्थलाङ्गली-
वचाचूर्णपयस्सिक्ताश्चम्पाः स्युः कुसुमान्विताः ॥ ३०

॥ सर्वबीजपोषणयोगः ॥

मीनकोलवसामांसदुग्धसेकेन धूपतः ।
सर्वबीजानि नाश्चर्यमुत्तिष्ठन्ति फलन्ति च ॥ ३१

---

1. वपा
2. वातस्या
3. सेचिताः
4. फल

॥ फलपाकाजननयोगः ॥

तत्कालनिहतस्योच्चैश्छागस्य स्कन्धचर्मणा ।
बद्धायां वृक्षशाखायां फलपाको न जायते ॥ ३२

॥ निरन्तफलदयोगः ॥

मधुयष्टिसिताकुष्ठमधुपुष्पविनिर्मितैः ।
मोदकैश्छादिते मूले निरन्तं स्यात्फलं तरोः ॥ ३३

॥ अङ्कोलतैलकल्पना ॥

अङ्कोलबीजमज्जानं सूक्ष्मचूर्णं तु कारयेत् ।
तिलतैलेन तच्चूर्णं भावितं सप्तवारतः ॥ ३४
मर्दयित्वोष्णतोयेन गृह्णीयात्तैलमुत्तमम् ।
नानाकर्माणि सिध्यन्ति तैलयोगेन योगिनाम् ॥ ३५

॥ अङ्कोलतैलकल्पना प्रकारान्तरम्॥

अङ्कोलबीजचूर्णं वा भावयेत् क्षारवारिणा ।
अपामार्गयुताङ्कोलभस्मजेन समन्वितम् ॥ ३६
पुनः सिद्धार्थतैलेन भावितं तदुलूखले ।
कुट्टितं क्षारपानीयमर्दितं वस्त्रपीडितम् ॥ ३७
तैलं मुञ्चति येनेहाकर्म [1]सिध्यति योगिनाम् ।

॥ फलानां वृद्धत्वकरो योगः ॥

बीजमात्रं तु वृक्षाणां [2]फलं मीन[3]पलाम्भसि ॥ ३८
अङ्कोलतैलदुग्धाज्ये निहितं वा[4]बृहद् भवेत् ।

॥ वैचित्र्यकरकल्पौ ॥

अङ्कोलजाततैलेन मिश्रितेनात्र सेचितः ॥ ३९

1. सिध्यन्ति
2. पक्वं
3. फलाम्भसि
4. बृहती

एरण्ड एव कार्वल्लीफलं सूतेऽत्र कौतुकम् ।
फले सिक्तं क्षणाद् बीजं दाडिमस्य प्ररोहति ॥ ४०

॥ इत्युद्यानवर्गः ॥

*  *  *

## ॥ अथ शाकवर्गः ॥

॥ पाठादिशाकसामान्यगुणाः ॥

शाकं पाठाशठीशूषासुनिषण्णसतीनजम् ।
त्रिदोषघ्नं लघु ग्राहि सराजक्षववास्तुकम् ॥ १

॥ सुनिषण्णकादिगुणाः ॥

सुनिषण्णोऽग्निकृद् वृष्यस्तेषु राजक्षवः परम् ।
[1]ग्रहण्यर्शोविकारघ्नो वर्चोभेदि तु वास्तुकम् ॥ २

॥ काकमाचीगुणाः ॥

हन्ति दोषत्रयं कुष्ठं वृष्या सोष्णा रसायनी ।
[2]काकमाची [3]सरा स्वर्या

॥ चाङ्गेरीगुणाः ॥

चाङ्गेर्यम्लाग्निदीपिनी ॥ ३
[4]ग्रहण्यर्शोऽनिलश्लेष्महितोष्णा ग्राहिणी लघुः ।

॥ पटोलादीनि तत्सामान्यगुणाश्च ॥

[5]पटोलसप्तलारिष्टशार्ङ्गेष्टाऽवल्गुजाऽमृताः ॥ ४
वेत्राग्रबृहतीवासा[6]कुन्तलीतिलपर्णिकाः ।
मण्डूकपर्णिकर्कोटकारवेल्लकपर्पटाः ॥ ५
नालीकलायगोजिह्वावार्ताकवनतिक्तकम् ।
करीरं कुलकं नन्दी कुचेला शकुलादिनी ॥ ६
कठिल्लं [7]केम्बुकं शीतं सकोशातककर्कशम् ।
तिक्तं [8]पाके कटु ग्राहि वातलं कफपित्तजित् ॥ ७

---

1. ग्रहिण्यर्शो 2. काकमाची 3. सरा
4. ग्रहि 5. पटोल 6. कुतली
7. कम्बुकं 8. पाकि

॥ पटोलादीनां विशेषगुणाः ॥

हृद्यं पटोलं क्रिमिनुत् स्वादु पाके रुचिप्रदम् ।
पित्तलं दीपनं मेदि वातघ्नं बृहतीद्वयम् ॥ ८
वृषं तु वमिकासघ्नं रक्तपित्तहरं परम् ।
कारवेल्लं सकटुकं दीपनं कफजित् परम् ॥ ९
वार्ताकं कटुतिक्तोष्णं मधुरं कफवातजित् ।

॥ करीरगुणाः ॥

सक्षारमग्निजनकं हृद्यं रुच्यमपित्तलम् ॥ १०
करीरमाध्मानकरं कषायं स्वादु तिक्तकम् ।

॥ कोशातकादिगुणाः ॥

कोशातकावल्गुजकौ मेदिनावग्निदीपनौ ॥ ११
[1]तण्डुलीयो हिमो रूक्षः स्वादुपाकरसो लघुः ।
मदपित्तविषास्रघ्नो [2]मुञ्जातं वातपित्तजित् ॥ १२
स्निग्धं शीतं गुरु स्वादु बृंहणं शुक्लकृत् परम् ।
पालक्याः पिछिला [3]गुर्व्यः श्लेष्मला मेदिनो हिमाः ॥ १३
दग्धव्रणहराश्चैव मदघ्नी [4]चाप्युपोदका ।
पालक्यावत् स्मृतश्चञ्चुः स तु संग्रहणात्मकः ॥ १४

॥ विदारीगुणाः ॥

विदारी वातपित्तघ्नी मूत्रला स्वादुशीतला ।
जीवनी बृंहणी [5]वर्ण्या गुर्वी वृष्या रसायनी ॥ १५

॥ जीवन्तीगुणाः ॥

चक्षुष्या सर्वदोषघ्नी जीवन्ती मधुरा हिमा ।

---

1. तण्डुलीयो 2. मुञ्जनं 3. गुर्व्याः
4. चाप्युपोतकी 5. कर्ण्या

॥ कूश्माण्डादीनि तत्सामान्यगुणाश्च ॥

कूश्माण्ड[1]तुम्बकालिङ्ग कर्कार्व्वारु[2]तिण्डिशम् ॥ १६
तथा त्रपुसचीनाक [3]चिर्भटं कफवात[4]कृत् ।
भेदि विष्टम्भ्यभिष्यन्दि स्वादुपाकरसं गुरु ॥ १७

॥ कूश्माण्डादीनां विशेषगुणाः ॥

वल्लीफलानां प्रवरं कूश्माण्डं वातपित्तजित् ।
बस्तिशुद्धिकरं वृष्यं [5]त्रपुसं त्वतिमूत्रलम् ॥ १८
तुम्बं रूक्षतरं ग्राहि कालिङ्गोर्वारु[6]चिर्भटम्
बालं पित्तहरं शीतं विद्यात् पक्वमतोऽन्यथा ॥ १९

॥ शीर्णवृन्तगुणाः ॥

[7]शीर्णवृन्तं तु सक्षारं पित्तलं कफवातजित् ।
दीपनं पाचनं हृद्यमष्ठीलानाहजिल्लघु ॥ २०

॥ मृणालादीनि तद्गुणाश्च ॥

मृणाळबिसशालूककुमुदोत्पलकन्दकम् ।
नन्दिमाषककेलूटशृङ्गाटककशेरुकम् ॥ २१
क्रौञ्चादनं गलोड्यं च रूक्षं ग्राहि हिमं गुरु ।

॥ कलम्बादीनि तत्सामान्यगुणाश्च ॥

[8]कलम्बनालिकामार्षकुटिञ्जरकुतुम्बकम् ॥ २२
चिल्लीलट्वाकलोणीका[9]कुरुण्टकगवेधुकाः ।
जीवन्ति[10]झुञ्झुडगजयवशाकसुवर्चलाः ॥ २३
[11]आलुकानि च सर्वाणि तथा सूप्यानि लक्ष्मणा ।

---

1. कुम्भ 2. निन्दिषम् 3. चिर्भिटं
4. जित् 5. त्रपुसकृति 6. चिर्भटम्
7. शीर्णवृन्तं 8. कलम्बुका गोलिकका माषकटीअर
9. कुरुन्द 10. क्षवेरगाव 11. आलोकानि

स्वादु रूक्षं सलवणं वातश्लेष्मकरं गुरु ॥ २४
शीतलं सृष्टविण्मूत्रं प्रायो विष्टभ्य जीर्यति ।

॥ चिल्ल्यादीनां विशेषगुणाः ॥

लघुपत्रा तु या चिल्ली सा वास्तुकसमा मता २५
[1]तर्कारीवरणं स्वादु सतिक्तं कफवातजित् ।
वर्षाभ्वौ कालशाकं च सक्षारं कटुतिक्तकम् ॥ २६
दीपनं भेदनं हन्ति गरशोफकफानिलान् ।
दीपनाः कफवातघ्नाश्चिरिबिल्वाङ्कुराः सराः ॥ २७
[2]शतावर्यङ्कुरास्तिक्ता वृष्या दोषत्रयापहाः ।
रूक्षो वंशकरीरस्तु विदाही वातपित्तलः ॥ २८
पत्तूरो दीपनः स्निग्धः प्लीहार्शःकफवातजित् ।
क्रिमिकासकफोत्क्लेदान् कासमर्दो जयेत् सरः ॥ २९
रूक्षोष्णमम्लं कौसुम्भं गुरु [3]पित्तकरं सरम् ।
गुरूष्णं सार्षपं बद्धविण्मूत्रं सर्वदोषकृत् ॥ ३०

॥ मूलकगुणाः ॥

यद् बालमव्यक्तरसं किञ्चित् क्षारं सतिक्तकम् ।
तन्मूलकं दोषहरं लघु सोष्णं नियच्छति ॥ ३१
गुल्मकासक्षयश्वासव्रणनेत्रगलामयान् ।
स्वराग्नि[4]सादोदावर्तपीनसांश्च महत् पुनः ॥ ३२
रसे पाके च कटुकमुष्णवीर्यं त्रिदोषकृत् ।
गुर्वभिष्यन्दि च स्निग्धं स्विन्नं तदपि वातजित् ॥ ३३
वातश्लेष्महरं शुष्कं सर्वमामं तु दोषलम् ।

॥ पिण्डालुगुणाः ॥

कटूष्णो वातकफहा पिण्डालुः पित्तवर्धनः ॥ ३४

---

1. तर्कारीवरणं 2. शतापर्व्यङ्कुरास्तिक्ताः 3. दीप्तकरं 4. दोषो

॥ कुठेरादीनि तत्सामान्यगुणाश्च ॥

कुठेरशिग्रुसुरससुमुखासुरिभूस्तृणम् ।
फणिज्जार्जकजम्बीरप्रभृति ग्राहि *शालनम् ॥ ३५
विदाहि कटु रूक्षोष्णं हृद्यं दीपनपाचनम् ।
दृक्शुक्रक्रिमिहृत तीक्ष्णं दोषोत्क्लेदकरं लघु ॥ ३६

॥ सुरसादीनां विशेषगुणाः ॥

हिध्माकासविष[1]श्वासपार्श्वरुक्पूतिगन्धहा ।
सुरसः सुमुखो नातिविदाही गरशोफहा ॥ ३७
[2]आर्द्रिका *तिक्तमधुरा मूत्रला न च पित्तकृत् ।

॥ लशुनगुणाः ॥

लशुनो भृशतीक्ष्णोष्णः कटुपाकरसः सरः ॥ ३८
हृद्यः केश्यो गुरुर्वृष्यः स्निग्धो रोचनदीपनः ।
[3]किलासकुष्ठगुल्मार्शोमेहक्रिमिकफानिलान् ॥ ३९
सहिध्मापीनसश्वासकासान् हन्त्यस्रपित्तकृत् ।

॥ पलाण्डुगुणाः ॥

पलाण्डुस्तद्गुणान्यूनः श्लेष्मलो नातिपित्तलः ॥ ४०

॥ गृञ्जनकगुणाः ॥

कफवातार्शसां पथ्यः स्वेदाभ्यवहृतौ तथा ।
तीक्ष्णो गृञ्जनको ग्राही पित्तिनां हितकृन्न च ॥ ४१

॥ सूरणभूकन्दगुणाः ॥

दीपनः सूरणो रुच्यः कफघ्नो विशदो लघुः ।
विशेषादर्शसां पथ्यः ; भूकन्दस्त्वतिदोषलः ॥ ४२

॥ शाकावयवानां गुरुलाघवम् ॥

पत्रे पुष्पे फले नाले कन्दे च गुरुता क्रमात् ।

---

*शालन=व्यञ्जनं, उपदंशः

1. कास 2. आर्तिका 3. कीलास * आर्द्रिका=कुस्तुम्बरी

॥ शाकेषु वरावरौ ॥

वरा शाकेषु जीवन्ती सार्षपास्त्ववराः परम् ॥ ४३

॥ विशेषात्पत्रग्राह्याणि ॥

जीवन्ती वास्तुकः पाठा शटी शूषा पुनर्नवा ।
राजक्षवः काकमाची मत्स्याक्षः सुनिषण्णकः ॥ ४४
दश शाकानि पथ्यानि पत्रग्राह्याणि भूयसा ।

॥ फलग्राह्याणि ॥

प्राधान्येन फलग्राह्यं कूश्माण्डादिकमुच्यते ॥ ४५

॥ पत्रपुष्पफलग्राह्यौ

पत्रपुष्पफलग्राह्यः प्रपुन्नाटः सशिग्रुकः ।

॥ कन्दग्राह्याः ॥

प्रायः कन्दः परिग्राह्यो विदारीमूलकादिषु । ४६

॥ कन्दपत्रग्राह्याः ॥

कन्दपत्रपरिग्राह्याश्चिल्लिका[1]मूलकादयः ।

॥ इति शाकवर्गः ॥

* * *

## ॥ अथ फलवर्गः ॥

॥ द्राक्षागुणाः ॥

द्राक्षा फलोत्तमा वृष्या चक्षुष्या सृष्टमूत्र[2]विट् ।
स्वादुपाकरसा स्निग्धा [3]सकषाया हिमा गुरुः ॥ १
निहन्त्यनिलपित्तासृक्तिक्तास्यत्वमदात्ययान् ।
तृष्णाकासज्वरश्वासस्वरभेदक्षतक्षयान् ॥ २

॥ दाडिमगुणाः ॥

उद्रिक्तपित्ताञ्जयति दोषान् मधुरदाडिमम् ।

---

1. स्वस्तिकादयः 2. चित् 3. न कषाया

पित्ताविरोधि नात्युष्णमम्लं वातकफापहम् ॥ ३
सर्वं हृद्यं लघु स्निग्धं ग्राहि रोचनदीपनम् ।

॥ तालफलगुणाः ॥

फलं तु पित्तलं तालं तद्बीजं मूत्रलं हिमम् ।
वातपित्तहरं स्वादु गुरु वृष्यं कषायकम् ॥ ४

॥ पनसमोचगुणाः ॥

पनसं मधुरं नातिशीतं मोचं कषायकम् ॥ ५
रक्तपित्तहरं वृष्यं रुच्यं श्लेष्मकरं गुरु ।

॥ काश्मर्यफलगुणाः ॥

हृद्यं मूत्रविबन्धघ्नं पित्तासृग्वातनाशनम् ॥ ६
केश्यं रसायनं मेध्यं काश्मर्यं फलमुच्यते ।

॥ खर्जूरगुणाः ॥

क्षतक्षयापहं हृद्यं शीतलं तर्पणं गुरु ॥ ७
रसे पाके च मधुरं खर्जूरं रक्तपित्तजित् ।

॥ परूषकगुणाः ॥

पक्वं परूषं मधुरं वातपित्तनिबर्हणम् ॥ ८

॥ प्रियालगुणाः ॥

विपाके मधुरं शीतं रक्तपित्तप्रसादनम् ।
परं वातहरं स्निग्धमनुष्णं तु प्रियालजम् ॥ ९

॥ प्रियालकोलमज्जागुणाः ॥

प्रियालमज्जा मधुरा वृष्या पित्तानिलापहा ।
कोलमज्जा गुणैस्तद्वत् तृट्छर्दिश्वासकासजित् ॥ १०

॥ बिल्वगुणाः ॥

पक्वं सुदुर्जरं [1]बिल्वं दोषलं पूतिमारुतम् ।

---

1. बल्वं

दीपनं कफवातघ्नं बालं ; [1]प्राक्षुभयं तु तत् ॥ ११

॥ कपित्थगुणाः ॥

कपित्थमामं [2]कण्ठघ्नं दोषलं [3]दोषघाति तु ।
पक्वं हिध्मावमथुजित् सर्वं ग्राहि विषापहम् ॥ १२

॥ जम्बूफलगुणाः ॥

जाम्बवं गुरु विष्टम्भि शीतलं गुरु वातलम् ।
संग्राहि मूत्रशकृतो[4]रकण्ठ्यं कफपित्तकृत् ॥ १३

॥ आम्रगुणाः ॥

वातपित्तास्रकृद् बालं बद्धास्थि कफपित्तकृत् ।
गुर्वाम्रं वातजित् पक्वं स्वाद्वम्लं कफशुक्रकृत् ॥ १४

॥ मातुलुङ्गगुणाः ॥

लघ्वम्लं दीपनं हृद्यं मातुलुङ्गमुदाहृतम् ।
त्वक् तिक्तकटुका स्निग्धा मातुलुङ्गस्य वातजित् ।
बृंहणं मधुरं मांसं वातपित्तहरं गुरु ॥ १५
लघु तत्केसरं कासश्वासहिध्मामदात्ययान् ।
आस्यशोषानिलश्लेष्मविबन्धच्छर्द्यरोचकान् ॥ १६
गुल्मोदरार्शश्शूलानि मन्दाग्नित्वं च नाशयेत् ।

॥ करमर्दादिगुणाः ॥

[5]गुरूष्णवीर्यं वातघ्नं सरं च करमर्दकम् ॥ १७
तथाऽम्लं कोलकर्कन्धुलिकुचाम्रातमारुकम् ।
ऐरावतं दन्तशठं तूदं च मृगलिण्डिकम् ॥ १८
नातिपित्तकरं पक्वं शुष्कं च करमर्दकम् ।

॥ तौवराष्करगुणाः ॥

आरुष्करं तौवरकं कषायं कटु पाकि च ॥ १९

---

1. प्राक्षुभयं 2. कन्दघ्न 3. दोषपाति
4. रकण्ठ्यं 5. हन्त्युष्णवीर्यं

उष्णं क्रिमिज्वरानाहमेहदुर्नामनाशनम् ।
कुष्ठगुल्मोदरार्शोघ्नं कटु पाके तथैव च ॥ २०

॥ नारङ्गगुणाः ॥

वातघ्नं [1]दुर्जरं प्रोक्तं [2]नारङ्गस्य फलं गुरु ।
तृष्णाशूलकफोत्क्लेशच्छर्दिश्वासनिवारणम् ॥ २१

॥ जम्बीरादिगुणाः ॥

वातश्लेष्मविबन्धघ्नं जम्बीरं गुरु पित्तकृत् ।
द्राक्षापरूषकं चार्द्रमम्लं पित्तकफप्रदम् ॥ २२
स्वाद्वम्लं शीतमुष्णं च द्विधा पालेवतं गुरु ।

॥ चिञ्चाफलगुणाः ॥

जीर्णचिञ्चाफलं ग्राहि वातपित्तकफाञ्जयेत् ॥ २३
अभिघातार्तिजित् पथ्यं नवमस्माद्विपर्ययम् ।

॥ अवरफलम् ॥

फलानामवरं तत्र लिकुचं सर्वदोषकृत् ॥ २४

॥ त्याज्यफलानि ॥

हिमानिलोष्णदुर्वातव्याललालादिदूषितम् ।
जन्तुजुष्टं जले मग्नमभूमिजमनार्तवम् ॥ २५
[3]अन्यधान्ययुतं हीनवीर्यं जीर्णतयाति च ।
धान्यं त्यजेत्

॥ त्याज्यशाकफलानि ॥

तथा शाकं रूक्षसिद्धमकोमलम् ॥ २६
असंजातरसं तद्वच्छुष्कं चान्यत्र मूलकात् ।
प्रायेण फलमप्येवं तथामं बिल्ववर्जितम् ॥ २७

॥ इति फलवर्गः ॥

* * *

1. दुर्जितं 2. नारं नस्य 3. अन्याधान्य

## ।। अथ विविधौषधवर्गो लवणवर्गः ।।

### ।। लवणसामान्यगुणाः ।।

विष्यन्दि लवणं सर्वं सूक्ष्मं सृष्टमलं विदुः ।
वातघ्नं [1]पाकि तीक्ष्णोष्णं रोचनं कफपित्तकृत् ।। १

### ।। सैन्धवगुणाः ।।

सैन्धवं तत्र सुस्वादु वृष्यं हृद्यं त्रिदोषकृत् ।
लघ्वनुष्णं दृशः पथ्यमविदाह्यग्निदीपनम् ।। २

### ।। सौवर्चलगुणाः ।।

लघु [2]सौवर्चलं हृद्यं सुगन्ध्युद्गारशोधनम् ।
कटुपाकं विबन्धघ्नं दीपनीयं रुचिप्रदम् ।। ३

### ।। विडगुणाः ।।

ऊर्ध्वाधः कफवातानुलोमनं दीपनं विडम् ।
विबन्धानाहविष्टम्भशूलगौरवनाशनम् ।। ४

### ।। सामुद्रगुणाः ।।

विपाके स्वादु सामुद्रं गुरु श्लेष्मविवर्धनम् ।

### ।। औद्भिद्गुणाः ।।

सतिक्तकटुकक्षारं तीक्ष्णमुत्क्लेदि चौद्भिदम् ।। ५

### ।। कृष्णलवणगुणाः ।।

कृष्णे सौवर्चलगुणा लवणे गन्धवर्जिताः ।

### ।। रोमकगुणाः ।।

रोमकं लघु पांसूत्थं सक्षारं श्लेष्मलं गुरु ।। ६

### ।। लवणप्रयोगपरिभाषा ।।

लवणानां प्रयोगे तु [3]सैन्धवादीन् प्रयोजयेत् ।

### ।। इति लवणवर्गः ।।

---

1. ह्लादि 2. सर्चकं 3. सैन्धवं च

॥ यवक्षारगुणाः ॥

गुल्महृद्ग्रहणीपाण्डुप्लीहानाहगलामयान् ॥ ७
कासार्शः कफवातांश्च शमयेद्यावशूकजः ।

॥ क्षारसामान्यगुणाः ॥

क्षारः सर्वश्च परमं तीक्ष्णोष्णः क्रिमिजिल्लघुः ॥ ८
पित्तास्रदूषणः पाकी छेद्यहृद्यो विदारणः ।
अपथ्यः कटुलवण्याच्छुक्रौजः[1]केशचक्षुषाम् ॥ ९

॥ हिङ्गुगुणाः ॥

हिङ्गु वातकफानाहशूलघ्नं पित्तकोपनम् ।
कटुपाकरसं रुच्यं दीपनं पाचनं लघु ॥ १०

॥ जीरकद्वयगुणाः ॥

कटु श्लेष्मानिलघ्नं च गन्धाढ्यं जीरकद्वयम् ।

॥ कुस्तुम्बरीगुणाः ॥

आर्द्रा कुस्तुम्बरी कुर्यात् स्वादुः सौगन्ध्यहृद्यताम् ॥ ११
सा शुष्का मधुरा पाके स्निग्धा तृड्दाहनाशिनी ।

॥ कटुकागुणाः ॥

दोषघ्नी कटुका किञ्चित् तिक्ता स्रोतोविशोधिनी ॥ १२

॥ हरीतकीगुणाः ॥

कषाया मधुरा पाके रूक्षा विलवणा लघुः ।
दीपनी पाचनी मेध्या वयसः स्थापिनी परम् ॥ १३
उष्णवीर्या सराऽऽयुष्या बुद्धीन्द्रियबलप्रदा ।
कुष्ठवैवर्ण्यवैस्वर्यपुराणविषमज्वरान् ॥ १४
शिरोऽक्षिपाण्डुहृद्रोगकामिला[2]ग्रहणीगदान् ।
सशोषशोफातीसारमेहमोहवमिक्रिमीन् ॥ १५

---

1. क्लेश    2. ग्रहिणी

श्वासकासप्रसेकार्शःप्लीहानाहगरोदरम् ।
विबन्धं स्रोतसां गुल्म[1]मूरुस्तम्भमरोचकम् ॥ १६
हरीतकी जयेद्व्याधींस्तांस्तांश्च कफवातजान् ।

॥ आमलकविभीतकगुणः ॥

तद्वदामलकं शीतमम्लं पित्तकफापहम् ॥ १७
कटु पाके हिमं केश्यमक्षमीषच्च तद्गुणम् ।

॥ त्रिफलागुणाः ॥

इयं रसायनवरा त्रिफलाऽक्ष्यामयापहा ॥ १८
रोपणी त्वग्दक्लेदमेदोमेहकफास्रजित् ।

॥ त्रिजातचतुर्जातगुणाः ॥

सकेसरं चतुर्जातं त्वक्पत्रैलं त्रिजातकम् ॥ १९
कासश्वासकरं रुच्यं लघु श्लेष्मविनाशनम् ।

॥ मरिचगुणाः ॥

पित्तप्रकोपि तीक्ष्णोष्णं रूक्षं दीपनरोचनम् ॥ २०
रसे पाके च कटुकं कफघ्नं मरिचं लघु ।

॥ पिप्पलीगुणाः ॥

श्लेष्मला स्वादुशीताऽऽर्द्रा गुर्वी स्निग्धा च पिप्पली ॥ २१
सा शुष्का विपरीता तु स्निग्धा वृष्या रसे कटुः ।
स्वादुपाकाऽनिलश्लेष्मश्वासकासापहा सरा ॥ २२
न [2]तामत्युपयुञ्जीत रसायनविधिं विना ।

॥ नागरगुणाः ॥

नागरं दीपनं वृष्यं ग्राहि हृद्यं विबन्धनुत् ॥ २३
रुच्यं लघु स्वादुपाकं स्निग्धोष्णं कफवातजित् ।
तद्वदार्द्रकं

1. मुरुस्तम्भ 2. तामत्युप

॥ त्रिकटुकगुणाः ॥

एतच्च त्र्यं त्रिकटुकं [1]जयेत् ॥ २४

स्थौल्याग्निसदनश्वासकासश्लीपदपीनसान् ।

॥ चविकादिगुणाः ॥

[2]चविकापिप्पलीमूलं मरीचाल्पान्तरं गुणैः ॥ २५

चित्रकोऽग्निसमः पाके शोफार्शःक्रिमिकुष्ठहा ।

॥ पञ्चकोलगुणाः ॥

पञ्चकोलकमेतच्च मरीचेन विना स्मृतम् ॥ २६

गुल्मप्लीहोदरानाहशूलघ्नं दीपनं परम् ।

॥ महापञ्चमूलम् ॥

बिल्वकाश्मर्य[3]तर्कारीपाटलाटुण्टुकैर्महत् ॥ २७

जयेत् कषायं तिक्तोष्णं पञ्चमूलं कफानिलौ ।

॥ ह्रस्वपञ्चमूलम् ॥

ह्रस्वं बृहत्यंशुमती[4]द्वयगोक्षुरकैः स्मृतम् ॥ २८

स्वादुपाकरसं नातिशीतोष्णं सर्वदोषजित् ।

॥ मध्यमपञ्चमूलम् ॥

बलापुनर्णवैरण्डसूर्प्यपर्णीद्वयेन च ॥ २९

मध्यमं कफवातघ्नं नातिपित्तकरं सरम् ।

॥ जीवनपञ्चमूलम् ॥

अभीरुवीराजीवन्तीजीवकर्षभकैः स्मृतम् ॥ ३०

जीवनाख्यं तु चक्षुष्यं वृष्यं पित्तानिलापहम् ।

॥ तृणपञ्चमूलम् ॥

तृणाख्यं पित्तजिद्दर्भकासेक्षुशरशालिभिः ॥ ३१

॥ इति विविधौषधवर्गः ॥★

इति श्रीश्रीनिवासपण्डितराजविरचिते चिकित्सातिलके
सूत्रस्थाने अन्नविज्ञानीयो नाम षडुत्तरदशमोऽध्यायः ॥

---

1. त्यजेत् 2. चविका 3. तर्कारी 4. द्रुम्य

★ अत्र षोडशाध्यायं परिसमाप्य, अन्नरक्षाध्यायोपक्रमे ताम्बूलादिनित्योपयोगि-प्रकरणं मातृकास्वनुपलब्धमपि नित्योपयोगिप्रसङ्गात्तत उद्धृत्यास्मिन्नध्याये परिशिष्टप्रकरण-शीर्षकेण अर्पितम् ॥

## ॥ अथ सप्तदशोऽध्यायः ॥

अथातोऽन्नरक्षाध्यायं व्याख्यास्यामः ।

॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥

### ॥ राज्ञः कर्तव्यम् ॥

राजा राजगृहासन्ने प्राणाचार्यं निवेशयेत् ।
सर्वदा स भवत्येवं सर्वत्र[1]प्रतिजागृविः ॥ १

### ॥ भिषजः कर्तव्यम् ॥

अन्नपानं विषाद् रक्षेद् विशेषेण महीपतेः ।
योगक्षेमौ तदायत्तौ [2]धर्माद्या यन्निबन्धनाः ॥ २

### ॥ विषदलक्षणम् ॥

विषदः श्यावः शुष्कास्यो विलक्ष्यो [3]वीक्षते दिशः ।
स्वेदवेपथुमान् स्तब्धो भीतः स्खलति [4]जृम्भते ॥ ३

### ॥ सविषौदनलक्षणम् ॥

ओदनो विषवान् सान्द्रो यात्यवि[5]स्राव्यतामिव ।
चिरेण [6]पच्यते पक्वो भवेत् पर्युषितोपमः ॥ ४
मयूरकण्ठतुल्योष्मा मोहमूर्छा[7]प्रसेककृत् ।
हीयते वर्णगन्धाद्यैः क्लिद्यते चन्द्रिकाचितः ॥ ५

### ॥ सविषान्नपरीक्षा ॥

प्राप्यान्नं सविषं त्वग्निरेकावर्तः स्फुटत्यति ।
शिखिकण्ठाभधूमार्चिरनर्चिर्वोग्रगन्धवान् ॥ ६
म्रियन्ते मक्षिकाः प्राश्य काकः क्षामस्वरी भवेत् ।
कपोतपरभृद्दक्षचक्रवाका [8]जहत्यसून् ॥ ७

---

1. जागृविः 2. धर्माध्यायन्निबन्धनाः 3. वीक्ष्यते
4. जृंभिते 5. स्राभि 6. पच्यते
7. प्रसेक 8. दहत्यसून्

उद्वेगं याति मार्जारः शकृन्मुञ्चति वानरः ।
हृष्येन्मयूरस्तद् दृष्ट्वा मन्दतेजो भवेद्विषम् ॥ ८

॥ ज्ञाते सविषेऽन्ने कर्तव्यम् ॥

इत्यन्नं सविषं ज्ञात्वा त्यजेदेवं प्रयत्नतः ।
यथा तेन विपद्येरन्नपि न क्षुद्रजन्तवः ॥ ९

॥ सविषस्पर्शजा व्यापदः ॥

स्पृष्टे तु कण्डूदाहोषाज्वरार्तिस्फोटसुप्तयः ।
नखरोमच्युतिः शोफः

॥ तत्प्रतिक्रिया ॥

सेकाद्या विषनाशनाः ।
शस्तास्तत्र प्रलेपाश्च सेव्यचन्दनपद्मकैः ॥ १०
ससोमवल्कतालीसपत्रकुष्ठामृतानतैः ।

॥ वक्त्रगे विषे व्यापदः ॥

लाला जिह्वोष्ठयोर्जाड्यमूष्मा चिमिचिमायनम् ॥ ११
दन्तहर्षो रसाज्ञत्वं हनुस्तम्भश्च वक्त्रगे ।

॥ तत्प्रतिक्रिया ॥

सेव्याद्यैस्तत्र गण्डूषः सर्वं च विषजिद्धितम् ॥ १२

॥ आमाशयगते विषे व्यापदः ॥

आमाशयगते क्लेदमूर्च्छाध्मानमदभ्रमाः ।
रोमहर्षो वमिर्दाहश्चक्षुर्हृदयरोधनम् ॥ १३
बिन्दुभिश्चोपचयोऽङ्गानां

॥ पक्वाशयगे विषे व्यापदः ॥

पक्वाशयगते पुनः ।
अनेकवर्णं वमति मूत्रयत्यतिसार्यते ॥ १४
तन्द्रा कृशत्वं पाण्डुत्वमुदरं बलसंक्षयः ।

॥ तयोश्चिकित्सा ॥

तयोर्वान्तविरिक्तस्य हरिद्रे [1]कटभीङ्गुदम् ॥ १५
सिन्धुवारकनिष्पावकाम्पिकाशतपर्विकाः ।
तण्डुलीयकमूलानि कुक्कुटाण्डमवल्गुजम् ॥ १६
नावनाञ्जनपानेषु योजयेद् विषशान्तये ।

॥ विषपीतचिकित्सा ॥

विषपीताय दद्याच्च शुद्धायोर्ध्वमधस्तथा ॥ १७
सूक्ष्मं ताम्ररजः काले सक्षौद्रं हृद्विशोधनम् ।
शुद्धे हृदि ततः शाणं हेमचूर्णस्य दापयेत् ॥ १८

॥ हेमप्रयोगप्रशंसा ॥

न सज्जते हेमपाङ्गे पद्मपत्रेऽम्बुवद्विषम् ।
जायते विपुलं चायुर्गरेऽप्येष विधिः स्मृतः ॥ १९

*   *   *

॥ विरुद्धाहारप्रकरणम् ॥

विरुद्धमपि चाहारं विद्याद्गरविषोपमम् ।

॥ पयसा विरुद्धानि ॥

विरुद्धमम्लं पयसा सह सर्वं फलं तथा ॥ २०
तद्वत् कुलत्थवरककङ्गुवेल्लमकुष्ठकाः ।
विशेषात् पयसा मत्स्या मत्स्येष्वपि चिलीचिमः ॥ २१
भक्षयित्वा हरितकं मूलकादि [2]पयस्त्यजेत् ।

॥ श्वाविदादिविरुद्धानि ॥

वाराहं श्वाविधा नाद्याद्दध्ना पृषतकुक्कुटौ ॥ २२
आममांसानि पित्तेन माषसूपेन मूलकम् ।
अविं कुसुम्भशाकेन बिसैः सह विरूढकम् ॥ २३

---

1. कटविड्गुद   2. परित्यजेत्

॥ लिकुचविरुद्धानि ॥

माषसूपगुडक्षौद्रदध्याद्यैर्लिकुचं फलम् ।

॥ कदलीविरुद्धानि ॥

फलं कदल्यास्तक्रेण दध्ना तालफलेन वा ॥ २४

॥ काकमाचीविरुद्धानि ॥

कणोषणाभ्यां मधुना काकमाचीं गुडेन वा ।

॥ सर्पिष्युरुष्करे च विरुद्धविशेषः ॥

कांस्ये दशाहमुषितं सर्पिरुष्णं त्वरुष्करे ॥ २५

॥ ऐकध्यविरुद्धानि ॥

ऐकध्यं पायससुराकृसराः परिवर्जयेत् ।

॥ मध्वाज्यादिपञ्चके विरुद्धविशेषः ॥

मधुसर्पिर्वसातैलपानीयानि द्विशस्त्रिशः ॥ २६

एकत्र वा समांशानि विरुध्यन्ते परस्परम् ।

॥ दिव्योदकविरुद्धम् ॥

भिन्नांशे [1]अपि मध्वाज्ये दिव्यवार्यनुपानतः ॥ २७

॥ बलाकाविरुद्धम् ॥

वराहवसया भृष्टा बलाका हन्ति मानवम् ।

॥ विरुद्धसामान्यलक्षणम् ॥

यत्किञ्चिद् दोषमुत्क्लेश्य [2]न हरेत् तत् समासतः ॥ २८

विरुद्धं

॥ विरुद्धजव्यापत्प्रतिक्रिया ॥

शुद्धिरत्रेष्टा शमो वा तद्विरोधिभिः ।

॥ व्यापत्परिहारोपायः ॥

द्रव्यैस्तैरेव वा पूर्वं [3]शरीरस्याभिसंस्कृतिः ॥ २९

1. भिन्नमध्वाज्यैर्दिव्य 2. स 3. शरीरस्यापि संस्कृतिः

॥ विरुद्धस्याप्यपीडावहत्वम् ॥

व्यायामस्निग्धदीप्ताग्निवयःस्थबलशालिनाम् ।
विरोध्यपि न पीडायै सात्म्यमल्पं च भोजनम् ॥ ३०

॥ सात्म्यलक्षणम् ॥

स्याद् यत् सुखाय तत् सात्म्यं विरुद्धं प्रकृतेरपि ।

॥ हितसात्म्यीकरणप्रकारः ॥

पादेनापथ्यमभ्यस्तं पादपादेन वा त्यजेत् ॥ ३१
निषेवेत हितं तद्वदेकद्वित्र्यन्तरीकृतम् ।

॥ सहसा त्यागशीलनाभ्यां व्यापदः ॥

अपथ्यमपि हि त्यक्तं शीलितं पथ्यमेव वा ॥ ३२
सात्म्यासात्म्यविकाराय जायते सहसान्यथा ।

॥ क्रमशः प्रयोगे गुणाः ॥

क्रमेणापचिता दोषाः क्रमेणोपचिता गुणाः ॥ ३३
सन्तो [1]यान्त्यपुनर्भावमप्रकम्प्या भवन्ति च ।

॥ अहितवर्जनोपदेशः ॥

अत्यन्तसन्निधानानां दोषाणां दूषणात्मनाम् ॥ ३४
अहितैर्दूषणं भूयो न विद्वान् कर्तुमर्हति ।

॥ उपस्तम्भत्रयम् ॥

[2]आहारशयनाब्रह्मचर्यैर्युक्त्या प्रयोजितैः ॥ ३५
शरीरं धार्यते नित्यमगारमिव धारणैः ।

इति श्रीश्रीनिवासपण्डितविरचिते चिकित्सातिलके सूत्रस्थाने
अन्नसंरक्षणं नाम सप्तदशोऽध्यायः ॥

---

1 सतां यान्त्यपृथग्भाव 2. पद्यमिदं दिनचर्याध्यायेऽपि पठितम् ।

# ॥ अथाष्टादशोऽध्यायः ॥

॥ अथातो मात्राशितीयमध्यायं व्याख्यास्यामः ॥

॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥

### ॥ मात्राप्रशस्तिः ॥

मात्राशी सर्वकालं स्यान्मात्रा ह्यग्नेः प्रवर्तिका ।
मात्रां द्रव्याण्यपेक्षन्ते गुरूण्यपि लघून्यपि ॥ १

### ॥ गुरुलघुद्रव्यमात्रा ॥

गुरूणामर्धसौहित्यं लघूनां नातितृप्तता ।
मात्राप्रमाणं निर्दिष्टं सुखं [1]यावद् विजीर्यति ॥ २

### ॥ अमिताशने दोषाः ॥

भोजनं [2]हीनमात्रं तु न बलोपचयौजसे ।
सर्वेषां वातरोगाणां हेतुतां च प्रपद्यते ॥ ३

### ॥ अतिमात्राशनजा विकाराः ॥

अतिमात्रं पुनः सर्वानाशु दोषान् प्रकोपयेत् ।
पीड्यमाना हि वाताद्या युगपत् तेन कोपिताः ॥ ४
आमेनान्नेन दुष्टेन तदेवाविश्य कुर्वते ।
विष्टम्भयन्तोऽलसकं च्यावयन्तो विषूचिकाम् ॥ ५
अधरोत्तरमार्गाभ्यां सहसैवाजितात्मनः ।

### ॥ अलसकस्वरूपम् ॥

प्रयाति नोर्ध्वं नाधस्तादाहारो न च पच्यते ॥ ६
[3]आमाशयेऽलसीभूतस्तेन सोऽलसकः स्मृतः ।

### ॥ विषूचिकास्वरूपम् ॥

[4]विविधैर्वेदनोद्भेदैर्वाय्वादिभृशकोपतः ॥ ७

---

1. तावद्धि 2. ना हि मात्राभि [ मात्रं तु ] 3. आमाशये अलसीभूते तेन
4. इत ऊर्ध्वं मातृकायां ८४ आरभ्य संख्यातम् । परं तु श्लोको यथावदनुवर्तते

सूचीभिरिव गात्राणि [1]विध्यतीति विपूचिका ।

॥ विषूच्यां वातकर्माणि ॥

तत्र शूलभ्रमानाहकम्पस्तम्भादयोऽनिलात् ॥ ८

॥ पित्तकर्माणि ॥

पित्ताज्ज्वरातिसारान्तर्दाहतृट्[2]प्रलयादयः ।

॥ श्लेष्मकर्माणि ॥

कफाच्छर्द्यङ्गगुरुता[3]वाक्सङ्गष्ठीवनादयः ॥ ९

॥ अलसकसम्प्राप्तिर्लक्षणं च ॥

विशेषाद् दुर्बलस्याल्पवह्नेर्वेगविधारिणः ।
पीडितं मारुतेनान्नं श्लेष्मणा रुद्धमन्तरा ॥ १०
अलसं क्षोभितं दोषैः शल्यत्वेनैव संस्थितम् ।
शूलादीन् कुरुते तीव्रांश्छर्द्यतीसारवर्जितान् ॥ ११
सोऽलसः

॥ दण्डकालसकः ॥

अत्यर्थदुष्टास्तु दोषा दुष्टाम[4]बद्धखाः ।
यान्तस्तिर्यक्तनुं सर्वां दण्डवत् स्तम्भयन्ति चेत् ॥ १२
दण्डकालसकं नाम तं त्यजेदाशुकारिणम् ।

॥ आमविषम् ॥

[5]विरुद्धाध्यशनाजीर्णशीलिनो विषलक्षणम् ॥ १३
आमदोषं महाघोरं वर्जयेद् विषसंज्ञितम् ।
विषरूपाशुकारित्वाद् विरुद्धोपक्रमत्वतः ॥ १४

॥ अलसकचिकित्सा ॥

अथाममलसीभूतं साध्यं त्वरितमुल्लिखेत् ।

---

1. भिद्यतीति 2. छर्द्यज्वराः 3. वाक्सङ्ग
4. बन्धनैः 5. विरुद्धाध्यशनाजीर्ण

पीत्वा सोऽम्लपञ्चमूलं वायुष्णं योजयेत् ततः ॥ १५

स्वेदनं [1]फलवर्तिश्च मरुतोऽनुलोमनानि च ।
नाम्यमानानि चाङ्गानि भृशं स्विन्नानि वेष्टयेत् ॥ १६

॥ विषूचीचिकित्सा ॥

विषूच्यामतिवृद्धायां पार्ष्ण्योर्दाहः प्रशस्यते ।
तदहश्चोपवास्यैनं [2]विरिक्तवदुपाचरेत् ॥ १७

॥ भृङ्गमूललेपः ॥

*भृङ्गाङ्घ्रिलेपं परितश्च नाभेर्विषूचिकायां प्रवदन्ति सन्तः । १८

॥ शुण्ठीसैन्धवकल्कप्रयोगः ॥

[3]शुण्ठीसैन्धवयोः कल्कं चुक्रं तैलसमन्वितम्‡ ।
विषूचीमर्दनं कोष्णं गुल्मशूलनिवारणम् ॥† १९

॥ त्वक्पत्राद्युद्वर्तनम् ॥

त्वक्पत्ररास्नागरुशिग्रुकुष्ठैरम्लप्रपिष्टैः सवचा[4]शताह्वैः ।
उद्वर्तनं[5] खल्लिविषूचिकाघ्नं तैलं विपक्वं च तदर्थकारि ॥ २०

॥ पद्मकादिलेपप्रयोगः ॥

सरूक्षानद्धमुदरमम्लपिष्टैः प्रलेपयेत् ।
[6]चारुहैमवतीकुष्ठशताह्वाहिङ्गुसैन्धवैः ॥ २१

॥ यवचूर्णप्रयोगः ॥

तक्रेण युक्तं यवचूर्णमुष्णं सक्षौद्रमूत्रं जठराणि हन्यात् ।

---

1. "मदनं पिप्पली कुष्ठं वचा गौराश्च सर्षपाः । गुडक्षारसमायुक्ता फलवर्तिः प्रशस्यते" इति फलवर्तिलक्षणं ज्ञेयम् । 2. विरिक्त

* पद्यस्यास्योत्तरार्धं नोपलभ्यते ।

3. शुठके ‡ लिहेदिति शेषः 4. नताहै

5. खल्व 6. चारुः पद्मकः

॥ स्वेदविधिः ॥

[1]स्वेदं विदध्याच्च यवस्य चूर्णैरुष्णैरथान्यैरपि पाणिपादैः ॥ २२

॥ निष्पावादिः ॥

निष्पावपत्रं लवणमजमोदां सनागराम् ।
पिबेद् विषूचिकाजीर्णशूलाध्माननिबर्हणम् ॥ २३

॥ चूतबिल्वादिकल्कः ॥

चूतबिल्वपटुविश्वधातकीजीरकौषधकणाजमोदकैः ।
*कालशेयसहितं परिपीतं कल्कमाशु विनिहन्ति विषूचीम् ॥ २४
( विवेधस्तृणगुच्छान्वा सर्वाजीर्णप्रशान्तये ।
सचूतबीजादिकल्कः पादलेपः कषायः ॥ ) ? २५

॥ पादलेपः इक्षुरसप्रयोगश्च ॥

पादप्रलेपः कर्तव्यः कदम्बत्वक्कुषाम्भसा ।
विषूच्यामतिवृद्धायां पिबेच्चेक्षुरसं तथा ॥ २६

॥ करञ्जादिकषायः ॥

करञ्जत्रिफलानिम्ब[2]गुलूच्यब्दैः सवत्सकैः ।
पीतः कषायो वमनाद्घोरां हन्ति विषूचिकाम् ॥ २७

॥ अवस्थायां लवङ्गाम्बुविधिः ॥

पिपासायाः समुत्क्लेशे [3]लवङ्गस्याम्बु शस्यते । २८

॥ नयनाञ्जनयोगः ॥

व्योषं करञ्जस्य फलं हरिद्रा-
[4]मूलं समावाप्य च मातुलुङ्ग्याः ।
[5]छायाविशुष्का गुलिका विधेया
[6]हन्युर्विषूचीं नयनाञ्जनेन ॥ २९

---

1 स्वेदोपदैर्वा बहुशाल्पचूर्णैः
* कालशेयः = इन्द्रयवः
2. गुलूच्यब्दक 3. लवणाम्बु 4. मस्तेन मथ्या ह्मथ
5. मूलो 6. हन्त्यद्विषूचिं

॥ शिरीषादिवर्तिः ॥

शिरीषनक्ताह्वकपिञ्जबीज-
जयन्त्यपामार्गफलैस्तु वर्तिः ।
बस्तस्य मूत्रेण विषूचिकाघ्नी
प्रलेपनस्याञ्जनधूमयोगैः ॥ ३०

॥ नस्ययोगः ॥

चिञ्चापत्राम्भसा नस्यं स्यात् पटुत्रिकटूत्कटम् ।
भृङ्गतोयेन वा नस्यं विषूचीनाशनं परम् ॥ ३१

॥ टङ्कणचूर्णप्रयोगः ॥

भृष्टटङ्कणचूर्णं वा पिबेदुष्णाम्बुना सह ।

॥ कृष्णादिकषायः ॥

कृष्णानिम्बाभयाशुण्ठीसिद्धमम्भः ससैन्धवम् ॥ ३२
पिबेद् विषूचिकाजीर्णशूलाध्माननिबर्हणम् ।

॥ शरपुङ्खकषायः ॥

निर्यूहः शरपुङ्खोत्थः शृङ्गिबेरेण संयुतः ॥ ३३
विषूचीहरणः श्रेष्ठः परं वह्निविवर्धनः ।

॥ बिल्वादिकषायौ ॥

बिल्वनागरनिर्यूहो हन्याच्छर्दिं विषूचिकाम् ॥ ३४
बिल्वनागरकैडर्यकाथस्तदधिको गुणैः ।

॥ छर्दिघ्नयोगाः ॥

चूतादियुक्तस्तद्वच्च पूर्वस्मादधिको गुणैः ॥ ३५
जातीफलशृतं तोयं दद्याद् भद्रघनस्य च ।
माक्षिकव्योषसंयुक्तं नारिकेलोदकं पिबेत् ॥ ३६
मूर्ध्नि चिञ्चारसं दद्यात् किञ्चित्तैलविमिश्रितम् । ३७

॥ तृष्णाघ्नः कर्णध्मानयोगः ॥

तृषितस्य नरस्य कर्णरन्ध्रे
मृदितं बिल्वपलाशमिन्दुमिश्रम् ।

घमयेन्मुखसंभवैर्मरुद्भिः

सहसैवास्य निवृतिमेति तृष्णा ॥ ३८

॥ लाजपेयाप्रयोगाः ॥

शुण्ठीबिल्वबलातोये लाजपेयैव साधिता ।
वराल्दीप्यककणाविश्वलाजैः शृता हिता ॥ ३९
पेयाऽजीर्णविषूच्यादौ [1]लाजैस्तक्रेण साधिता ।

॥ तक्रादिविधिः ॥

अतिमात्रा विषूची चेत् तक्रं दधि हिमं जलम् ॥ ४०
नाळिकेराम्बु पेयं वा प्राणत्राणाय दापयेत् ।

इति मात्राशितीये विषूचिकावर्गः

*     *     *

॥ अथ रात्र[illegible]कलाक्रमवर्गः ॥

॥ आमे शमनौषधप्रतिषेधः ॥

तीव्रार्तिरपि नाजीर्णी पिबेच्छूलघ्नमौषधम् ।
आमसन्नोऽनलो नालं पक्तुं दोषौषधाशनम् ॥ १
निहन्यादपि चैतेषां विभ्रमः सहसाऽऽतुरम् ।

॥ तत्र भैषज्यकालः ॥

जीर्णाशने तु भैषज्यं युञ्ज्यात् स्तब्ध[2]गुरूदरे ॥ २
दोषशेषस्य पाकार्थमग्नेः सन्धुक्षणाय च ।

॥ आमविकारेऽपतर्पणविधिः ॥

शान्तिरामविकाराणां [3]भवति त्वपतर्पणात् ॥ ३

॥ अपतर्पणत्रैविध्यं तद्विषयाश्च ॥

त्रिविधं त्रिविधे दोषे तत् समीक्ष्य च योजयेत् ।
तत्राल्पे लङ्घनं पथ्यं मध्ये लङ्घनपाचनम् ॥ ४
प्रभूते शोधनं तद्धि मूलादुन्मूलयेन्मलान् ।

---

1. लाजैस्तर्केण 2. गुरूदरे 3. भवतीत्यपतर्पणात्

॥ सर्वव्याधिषु चिकित्सासूत्रम् ॥

एवमन्यानपि व्याधीन् स्वनिदानविपर्ययात् ॥ ५
चिकित्सेदनुबन्धे तु सति हेतुविपर्ययम् ।
त्यक्त्वा यथायथं वैद्यो युञ्ज्याद् व्याधिविपर्ययम् ॥ ६
तदर्थकारि वा

॥ पक्वे दोषे चिकित्साविधिः ॥

पक्वे दोषे त्विद्धे च पावके ।
हितमभ्यञ्जनस्नेहपानवस्त्यादि युक्तितः ॥ ७

॥ त्रिविधाजीर्णनिरूपणम् ॥

॥ आमाजीर्णलक्षणम् ॥

अजीर्णं च कफादामं तत्र [1]शोफोऽक्षिगण्डयोः ।
सद्यो भुक्त इवोद्गारः प्रसेकोत्क्लेशगौरवम् ॥ ८

॥ विष्टब्धाजीर्णलक्षणम् ॥

विष्टब्धमनिलाच्छूलविबन्धाध्मानसादकृत् ।

॥ विदग्धाजीर्णलक्षणम् ॥

पित्ताद् विदग्धं तृण्मोहभ्रमाम्लोद्गारदाहकृत् ॥ ९

॥ अजीर्णचिकित्सा ॥

लङ्घनं कार्यमामे तु विष्टब्धे स्वेदनं भृशम् ।
[2]विदग्धे वमनं यद्वा यथावस्थं हितं भवेत् ॥ १०

॥ विलम्बिकाजीर्णम् ॥

गरीयसो भवेल्लीनादामादेव विलम्बिका ।
कफवाता[3]नुबद्धामलिङ्गा तत्समसाधना ॥ ११

॥ रसशेषाजीर्णलक्षणम् ॥

अश्रद्धा हृद्व्यथा शुद्धेऽप्युद्गारे रसशेषतः ।

---

1. शोथो 2. विष्टम्भे 3. मविद्धा

॥ तच्चिकित्सा ॥

शयीत किञ्चिदेवात्र सर्वश्चानाशितो दिवा ॥ १२
स्वप्यादजीर्णी सञ्जातबुभुक्षोऽद्यान्मितं लघु ।

॥ अजीर्णसामान्यलक्षणम् ॥

विबन्धोऽतिप्रवृत्तिर्वा ग्लानिर्मारुतमूढता ॥ १३
अजीर्णलिङ्गं सामान्यं विष्टम्भो गौरवं भ्रमः ।

॥ अजीर्णस्य कारणान्तराणि ॥

न चातिमात्रमेवान्नमामदोषाय केवलम् ॥ १४
द्विष्टविष्टम्भिदग्धामगुरुरूक्षहिमाशुचि ।
विदाहि शुष्कमत्यम्बुप्लुतं चान्नं न जीर्यति ॥ १५
[1]उपतप्तेन भुक्तं च शोकक्रोधक्षुधादिभिः ।

॥ समशनाध्यशनविषमाशनानि ॥

मिश्रं पथ्यमपथ्यं च भुक्तं समशनं मतम् ॥ १६
विद्यादध्यशनं भूयो भुक्तस्योपरि भोजनम् ।
अकाले बहु वाल्पं वा भुक्तं तु विषमाशनम् ॥ १७
त्रीण्यप्येतानि मृत्युं वा घोरान् व्याधीन् सृजन्ति [2]वा ।
तस्मादग्निविवृद्ध्यर्थं सर्वं कार्यं भिषग्जितम् ॥ १८

॥ चतुर्विधाग्निषूपक्रमः ॥

समस्य रक्षणं कार्यं विषमे [3]वातनिग्रहः ।
तीक्ष्णे पित्त[4]प्रतीकारो मन्दे श्लेष्मविशोधनम् ॥ १९

॥ अग्निदीपनयोगः ॥

हरीतकीं भक्षमाणो नागरेण गुडेन वा ।
सैन्धवेन युतेनापि सातत्येनाग्निदीपनम् ॥ २०
अन्नमध्ये पिबेदुष्णं हिङ्गुसौवर्चलान्वितम् ।
विषमोऽपि समस्तेन मन्दो दीप्येत पावकः ॥ २१

---

1. उपतप्तं च 2. हि 3. वात निग्रहः 4. प्रतीकारं

॥ मन्दकल्पना ॥

सुतण्डुलानां प्रसृतद्वयं च
तदर्धमुद्गं कटुकं च तक्रम् ।
कुस्तुम्बरीसैन्धवहिङ्गुतैल-
मेभिश्च सर्वैः क्रियते हि मन्दः ॥ २२

॥ शुण्ठीकषायः ॥

अरुचिमनलमान्द्यं पीनसश्वासकासा-
नुदरमुदकदोषानाशु हन्यादशेषान् ।
जनयति तनुकान्तिं चित्तनेत्रप्रसादं
[1]पल्यपरिमितनिस्त्वक्शुद्धशुण्ठीकषायः ॥ २३

॥ भोजनाग्रे क्रमः ॥

भोजनाग्रे सदा पथ्यं जिह्वा[2]दन्तविशोधनम् ।
अग्निसन्दीपनं हृद्यं लवणार्द्रकभक्षणम् ॥ २४

॥ सैन्धवादि चूर्णम् ॥

सिन्धूत्थपथ्यमगधोद्भववह्निचूर्ण-
मुष्णाम्बुना पिबति यः खलु नष्टवह्निः ।
तस्यामिषेण सघृतं तु परान्नपानं
भस्मीभवत्यशितमात्रमपि क्षणेन ॥ २५

॥ दिवास्वापविधिः ॥

आलिप्य जठरं प्राज्ञो हिङ्गुत्र्यूषणसैन्धवैः ।
दिवास्वप्नं प्रकुर्वीत सर्वाजीर्णविनाशनम् ॥ २६

॥ धान्यनागरतोयम् ॥

धान्यनागरसिद्धं वा तोयं दद्याद् विचक्षणः ।
आमाजीर्णप्रशमनं शूलघ्नं वस्तिशोधनम् ॥ २७

---

1. फल 2. दन्तु

॥ अमृतहरीतकी ॥

[1]अम्लारनालगोमूत्रपयस्तक्रं घृतं दधि ।
दिने दिने क्रमेणैषु[2] भावयेदभयाशतम् ॥ २८
कटुत्रयं सर्वसमं रामठं क्षारयुग्मकम् ।
विलङ्गमग्निर्द्वे[3] जाज्यौ चव्यं लवणपञ्चकम् ॥ २९
सुगन्धित्रितयं चैव समान्येतानि चाहरेत् ।
दद्याद् गर्भे हरीतक्याश्चूर्णमेतत् तु शोधितम् ॥ ३०
त्रिवारमार्द्रकरसैर्जम्बीरेण तु पञ्चधा ।
क्रमेण भाविता [4]सेव्या त्वमृताख्या हरीतकी ॥ ३१
करोति बहुवीर्यत्वं दीपनं पुष्टिवर्धनम् ।
रसायनं त्रिदोषघ्नं भृगुणा समुदीरितम् ॥ ३२

॥ चित्रकादिगुलिकानिर्देशः ॥

गुलिका[5] चित्रकाख्यां तु या चोक्ता ग्रहणीगदे ।
सैवात्र तु प्रयोक्तव्या वह्निसन्धुक्षणाय च ॥ ३३

॥ वैश्वानरचूर्णम् ॥

लवण[6]यवानीदीप्यककणनागरमुत्तरोत्तरं वृद्धम् ।
सर्व[7]समांशहरीतकि चूर्णो वैश्वानरः साक्षात् ॥ ३४

॥ रुचकादिचूर्णम् ॥

एकांशो रुचकादुभौ मरिचतः शुण्ठ्यास्त्रयो जीरका-
च्चत्वारोऽर्धमितः समुद्रलवणाद् भागास्त्रयः सैन्धवात् ।

---

1. आका  2. अभयाशतशोधनम्  3. आजी चव्यं  4. पेया
5. ग्रन्थेऽस्मिन् सूत्रस्थानमात्रे ग्रहणीचिकित्साया अनुपलम्भेऽपि चित्रकादिगुलिकालक्षणं "चित्रकं पिप्पलीमूलं द्वौ क्षारौ लवणानि च । व्योषं हिङ्ग्वजमोदा च चव्यमेकत्र चूर्णयेत्" गुटिका मातुलुङ्गस्य दाडिमस्य रसेन वा । कृता विपाचयत्यामं दीपयत्याशु चानलम्" इति ग्रन्थान्तरेभ्योऽवगन्तव्यम् ॥
6. यवानि  7. भीमांश

चूर्णं सिंहलभूभुजेन्द्रकथितं तक्रेण संसेवितं
शूलाध्मानविषूचिकाक्रिमिहरं स्याद् भोजनान्ते सदा ॥ ३५

॥ भावनाशुण्ठी ॥

तक्रारनालदधिभिर्लुङ्गजम्बीरकार्द्रकैः ।
क्रमेण भाविता शुण्ठी समचूर्णैस्तु संयुता ॥ ३६
[1]षट्कोलं पञ्चलवणं द्विक्षारं जीरकद्वयम् ।
त्रिजातकं [2]च त्रिफला दीप्यहिङ्गुविलङ्गकम् ॥ ३७
[3]एतैस्तु भाविता प्रोक्ता सर्वारोचकनाशनी ।
दीपनी सर्वरोगघ्नी शुण्ठी स्याद् भावनाभिधा ॥ ३८

॥ दीप्यजीरकभावनाविशेषः ॥

एवमेव प्रयोक्तव्यं दीप्यजीरकयोः पृथक् ।

॥ मुक्ताक्षारवटी ॥

द्वौ क्षारौ *त्रित्रिकं पाठा चित्रकं लवणानि च ॥ ३९
सूक्ष्मैला पुष्करं भार्ङ्गी शठी हिङ्गु विलङ्गकम् ।
दार्वी त्रिवृद् वचा मुस्ता वृक्षाम्लं जीरकद्वयम् ॥ ४०
दीप्यकातिविषा श्यामा [4]हपुषा चतुरङ्गुलम् ।
अम्लवेतसमम्लीका भद्रदारु पृथक् समम् ॥ ४१
तिलमुष्ककशिग्रूणां कोकिलाक्षपलाशयोः ।
क्षाराणि लोहकिट्टं च [5]तप्तं गोमूत्रसेचितम् ॥ ४२
समभागानि सर्वाणि सूक्ष्मचूर्णानि कारयेत् ।
लुङ्गार्द्रजम्बीररसैर्भावयेत् सप्तधा पृथक् ॥ ४३

---

1. षट्कोलं पञ्चकोलं मरिचं च   2. तु   3. एतेषां पञ्चता

* त्रित्रिकं = त्रिकटु, त्रिफला, त्रिजातकं च ।

4. हपुष्पा   5. तप्तं गोमूत्रसेचितं इति लोहकिट्टस्य विशेषणम्

[A]दाडिमाम्लैस्त्रिधाप्याशु [1]वटकान् कर्षमात्रतः ।
यथा सात्म्यं तथा [2]वाद्याद् भुक्तं सर्वं हि जीर्यते ॥ ४४

अचिरादेव नश्यन्ति वह्निसादसमुद्भवाः ।
रोगा भुक्तजराख्यास्तु नाम्ना सर्वत्र पूजिताः ॥ ४५

॥ अग्निघृतम् ॥

पञ्चकोलं गजकणा पञ्चैव लवणानि च ।
द्वौ क्षारौ दीप्यकं हिङ्गु पृथगर्ध[3]पलोन्मितम् ॥ ४६
दधि[4]काञ्जिकशुक्तानि घृतमात्रासमानि च ।
आर्द्रकस्य रसं प्रस्थं घृतप्रस्थं विपाचयेत् ॥ ४७
एतदग्निघृतं नाम मन्दाग्नीनां च शस्यते ।
वातश्लेष्मोत्तरान् रोगान् हन्ति विष्णुर्यथा तमः ॥ ४८
तद्वै चाङ्गेर्यम्लरसयुक्तं स्याद् ग्रहणीहरम् ।

॥ अग्नितैलम् ॥

[5]चाङ्गेर्यम्लैर्विना पक्वं तैलमेरण्डसंभवम् ॥ ४९
दद्यादत्र घृतस्थाने स्रोतोमार्गविशुद्धये ।
क्रूरकोष्ठैः प्रयोक्तव्यं कोष्ठवातहरं परम् ॥ ५०

॥ शुक्तनिर्माणम् ॥

प्रस्थं तण्डुलतोयतस्तुषजलात् प्रस्थत्रयं चाम्लतः
प्रस्थार्धं [6]दधितोऽष्ट दीप्यकपलान्यष्टौ गुडान्मानिके ।
मानी [7]कोद्रवशृङ्गिबेरशकलाद् द्वे [8]शृङ्गचजाज्योः पले
द्वे कृष्णोषणयोर्निशा[9]पलयुगं निक्षिप्य माण्डे दृढे ॥ ५१
[10]स्निग्धे धान्ययवादिराशिनिहितं त्रीन् वासरांश्चाहरेत्

---

A चणकाम्लै
1. दापयेत्कर्षमात्रकम् 2. दद्यात् 3. फलोन्मितम्
4. काञ्जिकशुक्तानि 5. चाङ्गेर्यम्लैर्विना 6. दधितोऽम्लमूलकफलान्यष्टौ
7. कोर्यित 8. शृङ्गयजाज्योः फले 9. फल
10. स्निग्धो

ग्रीष्मे तोयधरात्यये च चतुरो वर्षासु पुष्पागमे ।
षट् चैतेषु दिनान्यतः परमिदं विस्राव्य [1]भाण्डे न्यसे-
च्चातुर्जात[2]पलकसंयुतमिदं शुक्तं च [3]चुक्रं च तत् ॥ ५२
हन्याद् वातकफामदोषजनितान् नानाविधानामयान्
दुर्नामानलशूलगुल्मजठरान् हत्वानलं दीपयेत् ॥ ५३

॥ शुक्तस्य कल्पनान्तरं ॥

यन्मस्त्वादि शुचौ भाण्डे सगुडक्षौद्रकाञ्जिकम् ।
धान्यराशौ त्रिरात्रस्थं [4]शुक्तं चुक्रं तदुच्यते ॥ ५४
गुडक्षौद्रारनालानि समस्तानि यथोत्तरम् ।
शंसन्ति द्विगुणान् भागान् सम्यक् [5]शुक्तस्य सिद्धये ॥ ५५

॥ आस्थापनीयशुक्तकल्पनम् ॥

नवभाण्डे मधुप्रस्थं विनिक्षिप्य विचक्षणः ।
स्वादुतोयाम्लकं दत्वा मन्थेन मथितं [6]ततः ॥ ५६
सप्तरात्रस्थितं चैव धान्यराशौ ततः परम् ।
शुक्तमेतद् विजानीयाच्छस्तनास्थापने परम् ॥ ५७

॥ व्योषादिबस्तिः ॥

व्योषं *बिल्वं व्याधिघातं त्रिबिल्वं
ह्रस्वं [7]तद्वत् पञ्चमूलं त्रिबिल्वम् ।
एतद्वस्तिः श्लेष्मरोगेषु सप्त-
कुष्ठे दुष्टे पीनसे च प्रशस्तः ॥ ५८
मन्दे वह्नौ श्वासकासामये च
[8]श्वित्रे [9]कूर्मे गुल्मशूले च शोफे ।

---

1. संचूर्णयेत् 2. फलैक 3. शुक्रं
4. शुक्रं 5. शुक्रस्य 6. बमः
* बिल्वं = पलम् । 7. पञ्चास्तुप्यसारं 8. वष्टौ
9. कूर्मः = जलकूर्मो नाम यकृदुदरसमान लक्षणो बालरोगविशेषः

कासश्वासे वस्तिरोधे गुदोत्थे
कीले[1] कृच्छ्रे शर्करापीडिते च ॥ ५९
हृच्छूले स्यात् पार्श्वशूलस्रवाते
विड्बन्धे स्यात् पृष्ठशूले किलासे ।*

॥ भोजनविधिः ॥

दीप्तेऽप्यग्नौ ततः काले सात्म्यमुष्णं हितं लघु ।
षड्रसं मधुरप्रायं शुचि स्निग्धं हरिं स्मरन् ॥ ६०
विष्णोर्नैवेद्यशेषं तु भुञ्जीयाद् बन्धुभिः सह † ।

॥ त्याज्यभोजनम् ॥

भोजनं तृणकेशादिजुष्टमुष्णीकृतं पुनः ॥ ६१
शाकावरान्नभूयिष्ठमत्युष्णलवणं त्यजेत् ।

॥ नित्यशीलनानर्हा आहाराः ॥

किलाटदधिकूचिकाक्षारशुक्ताम[2]मूलकम् ॥ ६२
माषनिष्पावशालूकबिस[3]पिष्टविरूढकम् ।
शुष्कशाकानि यवकान् फाणितं च न शीलयेत् ॥ ६३

॥ नित्यशीलनीयानि ॥

शीलयेच्छालिगोधूमयवषष्टिकजाङ्गलम् ।
पथ्यामलकमृद्वीकापटोलीमुद्गशर्कराः ॥ ६४

---

1 सर्वे

* अत्र व्योषादिवस्तेरूर्ध्वं, कुसुमद्रुतिविध्यादिर्मलबन्धजा विकाराश्च मातृकाया मुमकश्च दिनचर्याध्यायप्रस्तावे संग्रथिताः ॥

† D. 1338 संख्याक तालकोशात् विसृष्टो भागः, भुञ्जीयाद्बन्धुभिस्सह इत्यत ऊर्ध्वं नवमाण्डे, इत्यारभ्य, "स्यौल्यप्रदं पुष्टिदं,, इत्यन्तं लिखितः—'अत ऊर्ध्वं "भोजनं तृणकेशादि" इत्यारभ्य कोशान्तरे ग्रन्थो यथावदनुवर्तते"

2. मूलकम् 3. पिष्ट

घृतदिव्योदकक्षीरक्षौद्रदाडिमसैन्धवम् ।
त्रिफलां मधुसर्पिर्भ्यां निशि नेत्रबलाय च ॥ ६५
स्वास्थ्यानुवृत्तिकृद् यच्च रोगच्छेदकरं च यत् ।

॥ आहारानुपूर्वी ॥

अद्याद् द्रव्यं गुरु स्निग्धं स्वादु मन्दं स्थिरं [1]पुरः ॥ ६६
विपरीतमतश्चान्ते मध्येऽम्ललवणोत्कटम् ।

॥ अन्नपानप्रमाणम् ॥

अन्नेन कुक्षेर्द्वावंशौ पानेनैकं प्रपूरयेत् ॥ ६७
आश्रयं पवनादीनां चतुर्थमवशेषयेत् ।

॥ अनुपानभेदाः ॥

अनुपानं हिमं वारि यवगोधूमयोर्हितम् ॥ ६८
दध्नि [2]मद्ये विषे क्षौद्रे कोष्णं पिष्टमयेषु तु ।
शाकमुद्गादिविकृतौ मस्तुतक्राम्लकाञ्जिकम् ॥ ६९
सुरा कृशानां पुष्ट्यर्थं स्थूलानां च मधूदकम् ।
[3]शोषे मांसरसो मद्यं मांसे स्वल्पे च पावके ॥ ७०
[4]व्याध्यौषधाध्वभारस्त्रीलङ्घनातपकर्मभिः ।
क्षीणे बाले च वृद्धे च पयः पथ्यं यथामृतम् ॥ ७१

॥ अनुपानसामान्यलक्षणम् ॥

विपरीतं यदन्नस्य गुणैः स्यादविरोधि च ।
अनुपानं समासेन सर्वथा तत् प्रशस्यते ॥ ७२

॥ अनुपानगुणाः ॥

अनुपानं करोत्यूर्जां तृप्तिं व्याप्तिं दृढाङ्गताम् ।

---

1. पुनः
2. मद्ये विषे
3. शोषि
4. व्याध्यौषधार्थभारस्त्रि

अन्नसंघातशैथिल्यविक्लित्तिजरणानि च ॥ ७३

॥ अनुपाननिषेधः ॥

नोर्ध्वजत्रुगदश्वासकासोरःक्षतपीनसे ।
गीतभाष्यप्रसङ्गे च स्वरसादे च तद्धितम् । ७४

॥ पानानर्हाः ॥

प्रक्लिन्नदेहमेहाक्षिगलरोगव्रणातुराः ।
पानं त्यजेयुः

॥ पीत्वा भुक्त्वा च वर्ज्यानि ॥

सर्वश्च भाष्याध्वशयनं त्यजेत् ॥ ७५
पीत्वा ; भुक्त्वाऽऽतपं वह्निं यानप्लवनवाहनम् ॥

॥ भोजनकालः ॥

विसृष्टे विण्मूत्रे हृदि सुविमले दोषे [1]स्वपथगे ।
विशुद्धे चोद्गारे क्षुदुपगमने वातेऽनुसरति ।
तथाग्नावुद्रिक्ते विशदकरणे देहे च सुलघौ
प्रयुञ्जीताहारं विधिनियमितं कालः [2]स हि मतः ॥ ७६

॥ इति मात्राशितीये दीपनवर्गः ॥

* * *

## ॥ अथ भस्मकवर्गः

॥ भस्मकचिकित्साक्रमः ॥

भस्मकं च गुरुस्निग्धमन्दसान्द्र[3]हिमस्थिरैः ।
अन्नपानै[4]र्नयेच्छान्तिं दीप्तमग्निमिवाम्बुभिः ॥ १

॥ भस्मकहरा योगाः ॥

पयसा समधूच्छिष्टं घृतं वा तृषितः पिबेत् ।

---

1. स्वभगे
2. स्स महितः
3. हिमस्थिरैः
4. र्न चेच्छान्तिः

असकृत् पित्तहरणं पायसं प्रतिभोजयेत् ॥ २

अत्यग्नौ श्लेष्मलं मद्यं भुक्त्वा प्रस्वपनं दिवा ।

[1]शाखोटः पाटलीशाकं कूष्माण्डं शुष्कमामिषम् ॥ ३

पिण्याकमन्दमाकन्दं माहिषं दधि चेष्यते ।

सिद्धं लक्ष्मिफलेनान्नं दद्याच्च नवतण्डुलैः ॥ ४

श्यामात्रिवृद्भिपक्वं हि पयो दद्याद् विरेचनम् ।

जयेत् सर्पिर्दधिक्षीरैर्माहिषैर्भस्मकं भिषक् ॥ ५

॥ इति भस्मकवर्गः ॥

इति श्रीश्रीनिवासपण्डितराजविरचिते चिकित्सातिलके
सूत्रस्थाने मात्राशितीयो नामाष्टादशोऽध्यायः ॥

---

1. शाकोटौ

## ॥ अथैकोनविंशोऽध्यायः ॥

॥ अथातः शोधनादिगणं व्याख्यास्यामः ॥

॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥

**॥ छर्दनवर्गः ॥**

मदनमधुकलम्बानिम्बबिम्बीविशाला-
[1]त्रपुसकुटजमूर्वादेवदालीकृमिघ्नम् ।
विदुलदहनचित्राः कोशवत्यौ करञ्जः
कणलवणवचैलासर्षपाश्छर्दनानि ॥ १

**॥ विरेचनवर्गः ॥**

निकुम्भकुम्भत्रिफलागवाक्षीस्नुक्शङ्खिनी[2]नीलिनितिल्वकानि ।
शम्याककम्पिल्लकहेमदुग्धा दुग्धञ्च मूत्रञ्च विरेचनानि ॥ २

**॥ निरूहणवर्गः ॥**

मदनकुटजकुष्ठदेवदाली-
मधुकवचा दशमूलदारुरास्नाः ।
यवमिशिकृतवेधनं कुलत्थो
मधु लवणं त्रिवृता निरूहणानि ॥ ३

**॥ शिरोविरेचनवर्गः ॥**

वेल्लापामार्गव्योषदार्वीसुराला
बीजं शैरिषं बार्हतं शैग्रवं च ।
सारो माधूकः सैन्धवं तार्क्ष्यशैलं
त्रुट्यौ पृथ्वीका शोधयन्त्युत्तमाङ्गम् ॥ ४

**॥ वातघ्नवर्गः ॥**

भद्रदारु नतं कुष्ठं दशमूलं बलाद्वयम् ।
[3]वायुं वीरतरादिश्च विदार्यादिश्च नाशयेत् ॥ ५

---

1. मधुक 2. निविकि 3. वातं

॥ पित्तघ्नवर्गः ॥

दूर्वानन्तानिम्बवासात्मगुप्ता
गुन्द्राऽभीरुः शीतपाकी प्रियङ्गुः ।
न्यग्रोधादिः पद्मकादिः स्थिरे द्वे
पद्मं वन्यं शारिवादिश्च पित्तम् ॥ ६

॥ कफघ्नवर्गः ॥

आरग्वधादिरर्कादिर्मुष्ककाद्योऽसनादिकः ।
सुरसादिः समुस्तादिर्वत्सकादिर्बलासजित् ॥ ७

॥ जीवनीयगणः ॥

जीवन्तीकाकोल्यौ द्वे मेदे मुद्गमाषपर्ण्यौ च ।
ऋषभकजीवकमधुकं चेति गणो [1]जीवनीयाख्यः ॥ ८

॥ विदार्यादिगणः ॥

विदारिपञ्चाङ्गुल[2]वृश्चिकाली-
वृश्चीवदेवाह्वयसूर्प्यपर्ण्यः ।
कण्डूकरी जीवन[3]ह्रस्वसंज्ञे
द्वे पञ्चके गोपसुता त्रिपादी ॥ ९
विदार्यादिरसौ हृद्यो बृंहणो वातपित्तहा ।
शोफगुल्माङ्गमर्दोर्ध्वश्वासकासहरो गणः ॥ १०

॥ शारिवादिगणः ॥

शारिवोशीरकाश्मर्यमधूकशिशिरद्वयम् ।
यष्टी परूषकं हन्ति दाह[4]पित्तास्रतृड्ज्वरान् ॥ ११

॥ पद्मकादिगणः ॥

पद्मकपुण्ड्रौ वृद्धि[5]तुगर्द्ध्यः
शृङ्ग्यमृता दश जीवनसंज्ञाः* ।

---

1. त्रिवृनी  2. वालवृश्चि  3. हस्वं
4. पित्तान्नसतण्डुका  5. मकर्थं
* जीवन्त्यादिगणोक्ता दशेत्यर्थः

स्तन्यकरा घ्नन्तीरणपित्तं
प्रीणनजीवनबृंहणवृष्याः ॥ १२

॥ परूषकादिगणः ॥

परूषकं वरा द्राक्षा कट्फलं कतकात् फलम् ।
राजाह्वं दाडिमं शाकं तृण्मूत्रामयवातजित् ॥ १३

॥ अञ्जनादिगणः ॥

अञ्जनं फलिनी मांसी पद्मोत्पलरसाञ्जनम् ।
सैलामधुकनागाह्वं [1]विषान्तर्दाहपित्तजित् ॥ १४

॥ पटोलादिगणः ॥

पटोलकटुरोहिणीचन्दनं
मधुस्रवगुडूचिपाठान्वितम् ।
निहन्ति कफपित्तकुष्ठज्वरान्
विषं वमि[2]मरोचकं कामिलाम् ॥ १५

॥ गुडूच्यादिगणः ॥

गुडूचीपद्मका[3]रिष्टधान्यकारक्तचन्दनम् ।
पित्तश्लेष्मज्वरच्छर्दिदाहतृष्णाघ्नमग्निकृत् ॥ १६

॥ आरग्वधादिगणः ॥

आरग्वधेन्द्रयवपाटलिकाकतिक्ता
निम्बामृतामधुरसास्रुववृक्ष[4]पाठाः ।
भूनिम्बसैर्यकपटोलकरञ्जयुग्म-
सप्तच्छदाग्निसुषवीफलबाण[5]घोण्टाः ॥ १७
आरग्वधादिर्जयतिच्छर्दिकुष्ठविषज्वरान् ।
कफं कण्डूं प्रमेहं च दुष्टव्रणविशोधनः ॥ १८

---

2. तर्बा [इर्वा] सा 2. मजाचि 3. लक्ष्म
4. वाताः 5 कोटिः

॥ असनादिगणः ॥

असनतिनिशभूर्जश्वेतवाहप्रकीर्याः

खदिरकदरभण्डीशिंशपामेषशृङ्ग्यः ।

त्रिहिमतलपलाशा जोङ्गकः शाकशालौ

क्रमुकधवकलिङ्गच्छागकर्णाश्वकर्णाः ॥ १९

असनादिर्विजयते श्वित्रकुष्ठकफक्रिमीन् ।

पाण्डुरोगं प्रमेहं च मेदोदोषनिवर्हणः ॥ २०

॥ वरणादिगणः ॥

वरणसैर्यकयुग्मशतावरी-

दहन[1]मोरटबिल्वविषाणिकाः ।

द्विबृहतीद्विकरञ्जजयाद्वयं

बहुलपल्लवदर्भ[2]रुजाकराः ॥ २१

वरणादिः कफं मेदो मन्दाग्नित्वं नियच्छति ।

आढ्यवातं शिरश्शूलं गुल्मं [3]चान्तः सविद्रधिम् ॥ २२

॥ ऊषकादिगणः ॥

[4]ऊषकस्तुत्थकं हिङ्गु कासीसद्वयसैन्धवम् ।

[5]सशिलाजतु कृच्छ्राश्मगुल्ममेदःकफापहम् ॥ २३

॥ वीरतरादिगणः ॥

[6]वेल्लन्तरारणिकबूकवृषाश्मभेद-

गोकण्टकेत्कटसहाचरबाणकाशाः ।

वृक्षादनीनलकुशद्वयगुण्ठगुन्द्रा

भल्लूकमोरटकुरण्टकरम्भपार्थाः ॥ २४

वर्गो वीरतराद्योऽयं हन्ति वातकृतान् गदान् ।

अश्मरीशर्करामूत्रकृच्छ्राघातकफापहः ॥ २५

---

1. मोकविष    2. मलोकराः    3. चात्र
4. ऊषस्तुदकन्याङ्कु    5. सुसीला
6. वेल्लन्ती कपूरवृषाश्मभेदगौरण्टकरञ्जपोर्थाः

॥ लोध्रादिगणः ॥

लोध्रशाबरक[1]लोध्रपलाशा

[2]जिङ्गिणी सरलकट्फलयुक्ताः ।

कुत्सिता[3]म्बकदलीगतशोकाः

सैलवालपरिपेलवमोचाः ॥ २६

एष लोध्रादिको नाम मेदःकफहरो गणः ।

योनिदोषहरः[4]स्तम्भी वर्ण्यो विषविनाशनः ॥ २७

॥ अर्कादिगणः ॥

[5]अर्कालर्कौ नागदन्ती विशल्या

भार्ङ्गी रास्ना वृश्चिकाली प्रकीर्या ।

[6]प्रत्यक्पुष्पी पीततैलोदकीर्या

श्वेता[7]युग्मं तापसानां च वृक्षः ॥ २८

[8]अयमर्कादिको वर्गः कफमेदोविषापहः ।

क्रिमिकुष्ठप्रशमनो विशेषाद् व्रणशोधनः ॥ २९

॥ सुरसादिगणः ॥

सुरसयुगफणिज्जं कालमाला विडङ्गं

खरबुसवृषकर्णीकट्फलं कासमर्दः ।

क्षवक[9]सरसिभार्ङ्गीकार्मुकाः काकमाची

कुलहलविषमुष्टी भूस्तृणो भूतकेशी ॥ ३०

सुरसादिर्गणः श्लेष्ममेदःक्रिमिनिषूदनः ।

प्रतिश्यायारुचिश्वासकासघ्नो व्रणशोधनः ॥ ३१

॥ मुष्ककादिगणः ॥

[10]मुष्ककस्नुग्वराद्विपिपलाशधवशिंशपम् ।

गुल्ममेहाश्मरीपाण्डुमेदोऽर्शःकफशुक्रजित् ॥ ३२

---

1. शबाशा 2. झिंझिणी 3. दुरगळ 4. स्तंभपर्णी
5. अर्कावर्का 6. प्रत्यकपुष्टि 7. कगमं 8. अयं चूर्णपरो
9. शरनिजार्ङ्गी 10. धर्मामुष्ककर्ण गृहद्विपिप्पला

॥ वत्सकादिगणः ॥

वत्सक[1]मूर्वाभार्ङ्गी-
कटुका मरिचं घुणप्रिया च गण्डीरम् ।
एला पाठाऽजाजी
[2]कट्वङ्गफलाजमोदसिद्धार्थ[3]वचाः ३३
जीरकहिङ्गुविडङ्गं
पशुगन्धा पञ्चकोलकं घ्नन्ति ।
चल[4]कफमेदःपीनस-
गुल्मज्वरशूलदुर्नाम्नः ॥ ३४

॥ वचाहरिद्रादिगणौ ॥

वचाजलददेवाह्वनागरातिविषाभयाः ।
हरिद्राद्वययष्ट्याह्वकलशीकुटजोद्भवाः ॥ ३५
वचाहरिद्रादिगणावामातीसार[5]पाचनौ ।
मेदःकफाढ्यपवनस्तन्यदोषनिबर्हणौ ॥ ३६

॥ प्रियङ्ग्वम्बष्ठादिगणौ ॥

प्रियङ्गु[6]पुष्पाञ्जनयुग्मपद्माः
पद्माद्रजो योजनवल्ल्यनन्ता ।
[7]मानद्रुमो मोचरसः समङ्गा
पुन्नागशीतं मदनीयहेतुः ॥ ३७
अम्बष्ठा मधुकं नमस्करी
नन्दीवृक्षपलाशकच्छुराः ।
लोध्रं धातकिबिल्वपेशिके
[8]कट्वङ्गः कमलोद्भवं रजः ॥ ३८

---

1 मूर्ज्ञी 2 कल्पं 3 वराम्
4 रव 5 पाचनैः 6 पुणांज
7 सार 8 कल्पंगः

गणौ प्रियङ्ग्वम्बष्ठादी [1]पक्वातीसारनाशनौ।
सन्धानीयौ हितौ पित्ते व्रणानामपि रोपणौ। ३९

॥ न्यग्रोधादिगणः ॥

न्यग्रोधपिप्पलसदाफललोध्रयुग्म-
जम्बूद्वयार्जुनकपीतनसोमवल्काः।
[2]प्लक्षाम्रवञ्जुलप्रियालपलाशनन्दि-
कोलीकदम्बविरला मधुकं मधूकम् ॥ ४०
न्यग्रोधादिर्गणो [3]व्रण्यः संग्राही भग्नसाधनः।
मेदःपित्तास्रतृड्दाहयोनिरोगनिबर्हणः ॥ ४१

॥ एलादिगणः ॥

एलायुग्मतुरुष्ककुष्ठफलिनीमांसीजलध्यामकं
स्पृक्काचोरकचोचपत्र[4]तगरस्थौणेयजातीरसाः।
शुक्तिर्व्याघ्रनखः सुराह्वमगरुः श्रीवासकः कुङ्कुमं
चण्डागुग्गुलुदेवधूप[5]खपुराः पुन्नागनागाह्वयम् ॥ ४२
एलादिको वातकफौ विषं च विनियच्छति।
वर्णप्रसादनः कण्डू[6]पिडकाकोठनाशनः ॥ ४३

॥ श्यामादिगणः ॥

श्यामादन्तीद्रवन्तीक्रमुककुटरणीशङ्खिनीचर्मसाह्वाः
स्वर्णक्षीरीगवाक्षीशिखरिरजनिका[7]छिन्नरोहाकरञ्जाः।
बस्तान्त्री व्याधिघातो बहुल[8]बहुरसस्तीक्ष्णवृक्षात् फलानि
श्यामाद्यो हन्ति गुल्मं विषमरुचिकफौ [9]हृद्रुजं मूत्रकृच्छ्रम् ॥ ४४

---

1 पक्वौ दीनपाचनाश्च 2 वृक्षाम्लव 3 व्रण्यो
4 गदस्फोर्जेपत्रा।रिरसाः 5 लपुराः 6 पटका
7 भिन्नप्रोहाः करंभाः 8 फल 9 हृद्यजना

॥ द्रव्याणामूहापोहविधिः ॥

त्रयस्त्रिंशदिति प्रोक्ता वर्गास्तेषु त्वलाभतः ।
युञ्ज्यात् तद्विधमन्यच्च द्रव्यं [1]जह्यादयौगिकम् ॥ ४५

॥ वर्गाणामुपयोगक्रमः ॥

एते वर्गा दोषदृष्याद्यपेक्ष्य
कल्कक्वाथस्नेहलेहादियुक्ताः ।
पाने नस्येऽन्वासने वा बहिर्वा
लेपाभ्यङ्गैर्घ्नन्ति रोगांस्तु कृच्छ्रान् ॥ ४६

॥ इति श्रीश्रीनिवासपण्डितविरचितचिकित्सातिलके सूत्रस्थाने
शोधनादिगणो नामैकोनविंशोऽध्यायः ॥

---

1 जिह्मा

## ॥ अथ विंशोऽध्यायः ॥

**अथातः स्नेहविधिमध्यायं व्याख्यास्यामः ।**

इति ह स्माहुरात्रेयादयो महर्षयः ।

**॥ स्नेहनरूक्षणद्रव्यस्वरूपम् ॥**

गुरुशीत[1]सरस्निग्धमन्दसूक्ष्ममृदुद्रवम् ।
औषधं स्नेहनं प्रायो विपरीतं विरूक्षणम् ॥ १

**॥ स्नेहनवराणि ॥**

सर्पिर्मज्जा वसा तैलं स्नेहेषु प्रवरं मतम् ।
तत्रापि चोत्तमं सर्पिः संस्कारस्यानुवर्तनात् ॥ २

पित्तघ्नास्ते यथापूर्वमितरघ्ना यथोत्तरम् ।

**॥ स्नेह्याः ॥**

[2]स्वेद्यसंशोध्य[3]मद्यस्त्रीव्यायामासक्तचिन्तकाः ॥ ३
वृद्धबालाबलकृशा रूक्षाः क्षीणास्ररेतसः ।
वातार्तस्यन्दतिमिरदारुणप्रतिबोधिनः ॥ ४
[4]स्नेह्याः

**॥ अस्नेह्याः ॥**

न त्वतिमन्दाग्नितीक्ष्णाग्निस्थूलदुर्बलाः ।
ऊरुस्तम्भातिसारामगलरोगगरोदरैः ॥ ५
मूर्च्छाच्छर्दरुचिश्लेष्मतृष्णामद्यैश्च पीडिताः ।
[5]अपप्रसूता युक्ते च नस्ये बस्तौ विरेचने ॥ ६

**॥ स्नेहविशेषाणां कालाः ॥**

तैलं प्रावृषि वर्षान्ते सर्पिरन्यौ च माधवे ।
ऋतौ साधारणे स्नेहः शस्तोऽह्नि विमले रवौ ॥ ७

---

1 रस 2 सेव्य 3 मध्यस्त्रा
4 स्निह्या 5 अव

॥ औषधस्नेहमात्राः ॥

उत्तमस्य [1]पलं मात्रा पादोना मध्यमे स्मृता ।
जघन्यस्य [2]पलार्धेन स्नेहः [3]स्यादौषधादिषु ॥ ८
[4]असञ्चारक्रिया मात्रा गण्डूषे सा प्रकीर्तिता ।

॥ स्नेहप्रचारणप्रकारः ॥

युक्त्या [5]प्रचारयेत् स्नेहं भक्ष्याद्यन्नेन बस्तिभिः ॥ ९
नस्याभ्यञ्जनगण्डूषमूर्धकर्णाक्षितर्पणैः ।

॥ अच्छपेयस्य मात्रात्रयम् ॥

द्वाभ्यां चतुर्भिरष्टाभिर्यामैर्जीर्यन्ति याः क्रमात् ॥ १०
ह्रस्वमध्योत्तमा मात्रास्ताभ्यश्च ह्रसीयसीम् ।
कल्पयेद् वीक्ष्य दोषादीन् प्रागेव तु ह्रसीयसीम् । ११

॥ शोधनादिस्नेहकालमात्राः ॥

ह्यस्तने जीर्ण [6]एवान्ने [7]स्नेहोऽच्छः शुद्धये बहुः ॥
शमनः क्षुद्वतोऽनन्नो मध्यमात्रश्च शस्यते ॥ १२
बृंहणो रसमद्याद्यैः सभक्तोऽल्पः

॥ बृंहणस्नेहयोग्याः ॥

हितश्च सः ।
बालवृद्धपिपासार्तस्नेहद्विण्मद्यशीलिषु ॥ १३
[8]स्त्रीस्नेहनित्यमन्दाग्निसुखितक्लेशभीरुषु ।
मृदुकोष्ठाल्पदोषेषु काले चोष्णे कृशेषु च ॥ १४

॥ प्रयोगभेदेन गुणभेदाः ॥

प्राङ्मध्योत्तरभुक्तोऽसावधोमध्योर्ध्वदेहजान् ।
व्याधीन् जयेद्बलं कुर्यादङ्गानां च यथाक्रमम् ॥ १५

---

1 फलं 2 फलार्धेन 3 स्यादौ 4 असंचार्य
5 चोदये 6 वेनान्ने 7 स्नेहाच्छुद्धये 8 त्रि

॥ अच्छपेयस्यानुपानं उष्णोदकगुणाश्च ॥

वार्युष्णमच्छेऽनुपिबेत् स्नेहे तत्सुखपक्तये ।
आस्योपलेपशुद्ध्यै च तौवरारुष्करे तु न ॥ १६
जीर्णाजीर्णविशङ्कायां पुनरुष्णोदकं पिबेत् ।
तेनोद्गारवि[1]शुद्धिः स्यात् ततश्च लघुता रुचिः ॥ १७

॥ स्नेहप्रयोगे भोजननियमः ॥

[2]भोज्योऽन्नं मात्रया पास्यन्श्वः पिबन् [3]पीतवानपि ।
द्रवोष्णमनभिष्यन्दि नातिस्निग्धमसंकरम् ॥ १८

॥ विहारनियमः ॥

उष्णोदकोपचारी स्याद् ब्रह्मचारी क्षपाशयः ।
न वेगरोधी व्यायामक्रोध[4]शोकहिमातपान् ॥ १९
प्रवातयानयानाध्व[5]भाष्यात्यासनसंस्थितीः ।
नीचात्युच्चोपधानाहःस्वप्नधूमरजांसि च ॥ २०
यान्यहानि पिबेत् तानि [6]तावन्त्यन्यान्यपि त्यजेत् ।
सर्वकर्मस्वयं प्रायो व्याधिक्षीणेषु च क्रमः ॥ २१

॥ अच्छपानदिनमर्यादा ॥

त्र्यहमच्छं [7]मृदौ कोष्ठे क्रूरे सप्तदिनं पिबेत् ।
सम्यक् स्निग्धोऽथवा यावदतः सात्मीभवेत् परम् ॥ २२

॥ सम्यक्स्निग्धरूक्षलक्षणम् ॥

वातानुलोम्यं दीप्तोऽग्निर्वर्चः स्निग्धमसंहतम् ।
स्नेहोद्वेगः क्लमः सम्यक् स्निग्धे रूक्षे विपर्ययः ॥ २३

॥ अतिस्निग्धे दोषाः ॥

अतिस्निग्धे तु पाण्डुत्वं घ्राणवक्त्रगुदस्रवान् ।

---

1 शुद्धेस्या 2 येभ्योवं 3 न्पिसवान्कफी 4 कोनकामा
5 भाषात्यासक 6 नापं तन्वान्यपि 7 हृदा काष्ठि

स्नेहः करोति शोफार्शस्तन्द्रास्तम्भविसंज्ञताः ॥ २४
कण्डूकुष्ठज्वरोत्क्लेशशूलनाहभ्रमादिकान् ।

॥ तत्र चिकित्सा ॥

क्षुत्तृष्णोल्लेखनस्वेदरूक्षपानान्नभेषजम् ॥ २५
तक्रारिष्टखलोद्दालयवश्यामाककोद्रवम् ।
पिप्पली त्रिफला क्षौद्रपथ्यागोमूत्रगुग्गुलु ॥ २६
यथास्वं प्रतिरोगं च स्नेहव्यापदि साधनम् ।

॥ स्निग्धस्य वमनरेचनक्रमः ॥

स्निग्धद्रवोष्णधन्वोत्थरसभुक् स्वेदमाचरन् ॥ २७
स्निग्धस्त्र्यहं स्थितः [1]कुर्याद् विरेकं ; वमनं पुनः ।
[2]एकाहं दिनमन्यच्च कफमुत्क्लेश्य तत्करैः ॥ २८

॥ विरूक्ष्य स्नेहनीयाः ॥

[3]मांसला मेदुरा भूरिश्लेष्माणो विषमाग्नयः ।
स्नेहोचिताश्च ये स्नेह्यास्तान् पूर्वं रूक्षयेत् ततः ॥ २९
संस्नेह्य शोधयेदेवं स्नेहव्यापन्न जायते ।

॥ स्नेहसेवाफलम् ॥

दीप्तान्तराग्निः परिशुद्धकोष्ठः
प्रत्यग्रधातुर्बलवर्णयुक्तः ।
स्वस्थेन्द्रियो मन्दजरः स्थिरायुः
स्नेहोपसेवी पुरुषः प्रदिष्टः ॥ ३०

इति श्रीश्रीनिवासपण्डितविरचितचिकित्सातिलके
सूत्रस्थाने स्नेहविधिर्नाम विंशोऽध्यायः ॥

---

1 कुर्वति 2 येनाहं दीन 3 मास्वा मेदः श्लेष्म

## ॥ अथैकविंशोऽध्यायः ॥

अथातः [1]स्वेदविधिमध्यायं व्याख्यास्यामः ॥

॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥

### ॥ स्वेदभेदाः ॥

स्वेदस्तापोपनाहोष्मद्रवभेदाच्चतुर्विधः ।

### ॥ तापस्वेदविधिः ॥

तापोऽग्नितप्तवसनफालहस्ततलादिभिः ॥ १

### ॥ उपनाहस्वेदविधिः ॥

उपनाहो वचाकिण्वशताह्वादेवदारुभिः ।
धान्यैः समस्तैर्गन्धैश्च रास्नैरण्डजटामिषैः ॥ २
उद्रिक्तलवणैः स्नेह[2]चुक्रतक्रपयःप्लुतैः ।
केवले पवने, श्लेष्म[3]संसृष्टे सुरसादिभिः ॥ ३
पित्तेन पद्मकाद्यैस्तु * साल्वणाख्यैः पुनः पुनः ।
स्निग्धोष्णवीर्यैर्मृदुभिश्चर्मपट्टैरपूतिभिः ॥ ४
अलाभे वातजित्पत्रकौशेयाविकशाटकैः ।
बद्धं रात्रौ दिवा मुञ्चे[4]न्मुञ्चेद् रात्रौ दिवाकृतम् ॥ ५

### ॥ ऊष्मस्वेदविधिः ॥

ऊष्मा तूत्कारिकालोष्टकपालोपलपांसुभिः ।
पत्रभङ्गेन धान्येन करीषसिकतामिषैः ॥ ६
अनेकोपायसंतप्तैः प्रयोज्यो देशकालतः ।

---

1 सेर 2 शुक्त 3 संसृष्टेषु रसादिभिः

* "काकोल्यादिः स वातघ्नः सर्वाम्लद्रव्यसंयुतः । सानूपौदकमांसस्तु सर्वस्नेहसमन्वितः । सुखोष्णः स्पष्टलवणः साल्वणः परिकीर्तितः" इति साल्वणलक्षणम् ॥

4. द्वामुपक्वौ

॥ द्रवस्वेदे परिषेकविधिः ॥

शिग्रुवारणकैरण्डकरञ्जसुरसार्जकान् ॥ ७
शिरीषवासावंशार्कमालतीदीर्घवृन्ततः ।
पत्रभङ्गैर्वचाद्यैश्च मांसैश्चानूपवारिजैः ॥ ८
दशमूलेन च पृथक् सहितैर्वा यथामलम् ।
स्नेहवद्भिः सुराशुक्तवारिक्षीरादिसाधितैः ॥ ९
[1]कुम्भीर्गलन्तीर्नाडीर्वा पूरयित्वा रुजार्दितम् ।
वाससाच्छादितं स्निग्धं गात्रं सिञ्चेद् यथासुखम् ॥ १०

॥ अवगाहविधिः ॥

तैरेव वा द्रवैः पूर्णं कुण्डं सर्वाङ्गगेऽनिले ।
अवगाह्यातुरस्तिष्ठेदर्शःकृच्छ्रादिरुक्षु च ॥ ११

॥ स्वेदक्रमः ॥

निवातेऽन्तर्बहिः स्निग्धो [2]जीर्णान्नः स्वेदमाचरेत् ।
अल्पं वंक्षणयोः स्वल्पं दृङ्मुष्कहृदये न वा ॥ १२

॥ सम्यक्स्विन्नलक्षणमुपचारश्च ॥

[3]शीतशूलक्षये स्विन्नो जातेऽङ्गानां च मार्दवे ।
स्याच्छनैर्मृदितः स्नातस्ततः स्नेहविधिं भजेत् ॥ १३

॥ स्वेदातियोगे उपद्रवाः ॥

पित्तास्रकोपतृण्मूर्च्छास्वराङ्गसदनभ्रमाः ।
[4]सन्धिपीडा ज्वरः श्यावरक्तमण्डलदर्शनम् ॥ १४
स्वेदातियोगाच्छर्दिश्च

॥ तत्रोपक्रमः ॥

तत्र [5]स्तम्भनमौषधम् ।

---

1. कुंभीर्गलंपिर्नाचिर्वा 2. जीर्णंनं 3 शिर
4. सन्धीपिता 5 स्थं भव

विषक्षाराग्न्यतीसारच्छर्दिमोहातुरेषु च ॥ १५

॥ स्वेदनस्तम्भनद्रव्यस्वरूपम् ॥

स्वेदनं गुरु तीक्ष्णोष्णं प्रायः स्तम्भनमन्यथा ।
द्रवस्थिरसरस्निग्धरूक्ष[1]सूक्ष्मं च भेषजम् ॥ १६
स्वेदनं ; स्तम्भनं श्लक्ष्णसूक्ष्मरूक्षसरं द्रवम् ।
[2]प्रायस्तिक्तं कषायं च मधुरं च समासतः ॥ १७

॥ सम्यक् स्तम्भितलक्षणम् ॥

स्तम्भितः स्याद् बले लब्धे यथोक्तामयसंक्षयात् ।

॥ अतिस्तम्भितलक्षणम् ॥

[3]स्तम्भत्वक्स्नायुसंकोचकम्पहृद्वाग्घनुग्रहैः ॥ १८
पादोष्ठत्वक्करैः श्यावैरतिस्तम्भितमादिशेत् ।

॥ अस्वेद्याः ॥

न स्वेदयेदतिस्थूलरूक्षदुर्बलमूर्च्छितान् ॥ १९
स्तम्भनीयक्षतक्षीणक्षाममद्यविकारिणः ।
तिमिरोदरवीसर्पकुष्ठशोषाढ्यरोगिणः ॥ २०
पीतदुग्धदधिस्नेह[4]मधून् कृतविरेचनान् ।
भ्रष्टदग्धगुदग्लानिक्रोध[5]शोकभयार्दितान् ॥ २१
क्षुत्तृष्णा[6]कामलापाण्डुमेहिनः पित्तपीडितान् ।
गर्भिणीं पुष्पितां सूतां मृदु वात्ययिके गदे ॥ २२

॥ स्वेद्याः ॥

श्वासकासप्रतिश्यायहिध्माध्मानविबन्धिषु ।
स्वरभेदानिलव्याधिश्लेष्मामस्तम्भगौरवे ॥ २३
महत्त्वे मुष्कयोः खल्ल्यामायामे वातकण्टके ।

---

1. रूक्षं 2. प्रायस्तिक्तं 3. स्तंभस्व
4. मधुं 5- नो न 6. कामलो

मूत्रकृच्छ्रार्बुदग्रन्थिशुक्राघाताढ्यमारुते ॥ २४
स्वेदं यथायथं कुर्यात् तदौषधविभागतः ।

**॥ अनाग्नेयस्वेदविधिः ॥**

स्वेदो हितस्त्वनाग्नेयो वाते मेदःकफावृते ॥ २५
निवातं गृहमायासो गुरुप्रावरणं भयम् ।
उपनाहाहवक्रोधभूरिपानं क्षुधाऽऽतपः ॥ २६

**॥ स्नेहस्वेदयोः शोधनाङ्गत्वम् ॥**

स्नेहक्लिन्नाः कोष्ठगा [1]धातुगा वा
स्रोतो[2]लीना ये च शाखास्थिसंस्थाः ।
दोषाः स्वेदैस्तै द्रवीकृत्य कोष्ठं
नीताः सम्यक्शुद्धिभिर्निर्ह्रियन्ते ॥ २७

**इति श्रीश्रीनिवासपण्डितविरचिते चिकित्सातिलके सूत्रस्थाने स्वेदविधिर्नामैकविंशोऽध्यायः ॥**

---

1 धागाधा 2 लिनात्पचे

# ॥ अथ द्वाविंशोऽध्यायः ॥

॥ अथातो वमनविरेकाध्यायं व्याख्यास्यामः ॥

॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥

**॥ वमनविरेचनार्हदोषाः ॥**

कफे विदध्याद् वमनं संयोगे वा कफोल्बणे ।

तद्वद् विरेचनं पित्ते

**॥ वम्याः ॥**

विशेषेण तु वामयेत् ॥ १

नवज्वरातिसाराधःपित्तासृग्राजयक्ष्मिणः ।

कुष्ठमेहापचिग्रन्थिश्लीपदोन्मादकासिनः ॥ २

श्वासहृल्लासवीसर्पस्तन्यरोगोर्ध्वरोगिणः ।

**॥ अवम्याः ॥**

अवम्या गर्भिणी रूक्षः क्षुधितो नित्यदुःखितः ॥ ३

बालवृद्धकृशस्थूलहृद्रोगिक्षतदुर्बलाः ।

प्रसक्तवमथुप्लीहतिमिरक्रिमिकोष्ठिनः ॥ ४

ऊर्ध्वप्रवृत्तवाय्वस्रदत्त[1]बस्तिहतस्वराः ।

मूत्राघात्युदरी गुल्मी दुर्वमोऽत्यग्निरर्शसः ॥ ५

उदावर्तभ्रमाष्ठीलापार्श्वरुग्वातरोगिणः ।

ऋते विषगराजीर्णविरुद्धाभ्यवहारतः ॥ ६

**॥ धूमान्तैः सर्वैश्च वर्ज्याः ॥**

अवाम्या [2]ये दुर्बलान्तास्ते नवज्वरपीडिताः ।

धूमान्तैः कर्मभिर्वर्ज्याः ; सर्वैरेव त्वजीर्णिनः ॥ ७

---

1 हस्ति    2 स्वेतु यतंस्ते ते

॥ विरेच्याः ॥

विरेकसाध्या गुल्मार्शोविस्फोटव्यङ्गकामिलाः ।
जीर्णज्वरोदरच्छर्दिगरप्लीहहलीमकाः ॥ ८
विद्रधिस्तिमिरं काचस्यन्दपक्वाशयव्यथाः ।
योनिशुक्राश्रया रोगाः [1]कोष्ठगाः क्रिमयो व्रणाः ॥ ९
वातास्रमूर्ध्वगं रक्तं मूत्राघातः शकृद्ग्रहः ।
मेहापचिग्रन्थिकुष्ठस्तन्यदोषोर्ध्वरोगिणः ॥ १०
श्वासहृल्लासवीसर्पश्लीपदोन्मादकासिनः ।

॥ अविरेच्याः ॥

न विरेच्याः कदाचित् तु ज्वरेणामेन पीडिताः ॥ ११
अल्पाग्न्यधोग[2]पित्तास्रक्षतपाय्वतिसारिणः ।
[3]सशल्यास्थापितक्रूरकोष्ठातिस्निग्धशोषिणः ॥ १२

॥ वमनविधिः ॥

अथ साधारणे काले स्निग्धस्विन्नं यथाविधि ।
[4]श्वोवम्यमुत्क्लिष्टकफं मत्स्यमाषतिलादिभिः । १३
निशासुप्तं सुजीर्णान्नं [5]पूर्वाह्णे कृतमङ्गलम् ।
निरन्नमीषत्स्निग्धं वा पेयया पीतसर्पिषम् ॥ १४
वृद्धबालाबलक्लीबभीरून् रोगानुरोधतः ।
[6]आकण्ठं पाययेन्मद्यं क्षीरमिक्षुरसं रसम् ॥ १५
यथाविकारं विहितां मधुसैन्धवसंयुताम् ।
कोष्ठं विभज्य भैषज्यमात्रां मन्त्राभिमन्त्रिताम् ॥ १६

॥ अनुपानमात्राः ॥

अनुपानं प्रयोक्तव्यं व्याधौ [7]श्लेष्मोल्बणे पलम् ।
[8]पलद्वयं वानिलजे पित्तजे तु [9]पलत्रयम् ॥ १७

---

1 कुष्ठाः 2. पित्तास्र 3. सकृत्या
4. श्वावाम्यासुत्क्लिष्टकफं 5. पूर्वाह्णे 6. आमदं
7. श्लेष्मकवेचकम् 8. फल 9. फल

कल्कमोदकचूर्णानां कर्षमद्याच्च लेह्तः ।
[1]एकद्वित्रिपलं वाथ वयोरोगाद्यपेक्षया ॥ १८

(॥ मन्त्रः ॥)

( ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानिलानलाः ।
ऋषयस्सौषधग्रामा भूतसंघाश्च पाण्डवः ॥ १९
रसायनमिवर्षीणाममराणामिवामृतम् ।
सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते ॥ ) २०
प्राङ्मुखं पाययेत्[2]पीतो मुहूर्तमनुपालयेत् ।
तन्मनाः

॥ वमनप्रवर्तनं ॥

जातहृल्लासप्रसेकश्छर्दयेत् ततः ॥ २१
अङ्गुलीभ्यामनायस्तो नालेन मृदुनाथ वा ।
गलता[3]ल्परुजन् वेगानप्रवृत्तान् प्रवर्तयेत् ॥ २२
प्रवर्तयेत् प्रवृत्तांश्च जानुतुल्यासनस्थितः ।

॥ वमनकाले उपचाराः ॥

उभे पार्श्वे ललाटं च [4]वमतश्चास्य धारयेत् ॥ २३
प्रपीडयेत् तथा नाभिं पृष्ठं च प्रतिलोमतः ।

॥ दोषभेदेन द्रव्याणि ॥

कफे तीक्ष्णोष्णकटुकैः पित्ते स्वादुहिमैरिति ॥ २४
वमेत् स्निग्धोष्णलवणैः संसृष्टे मरुता कफे ।

॥ वमनावधिः ॥

पित्तस्य दर्शनं यावच्छेदो वा श्लेष्मणो भवेत् ॥ २५

॥ हीनवेगे द्रव्याणि ॥

हीनवेगः कणाधात्रीसिद्धार्थलवणोदकैः ।
वमेत् पुनः पुनः

---

1. मन्यैकद्विफलं 2. द्विपि
3. ल्परुजा 4. रमत

॥ अयोगलक्षणं उपद्रवाश्च ॥

तत्र वेगानामप्रवर्तनम् ॥ २६
प्रवृत्तिः सविबन्धा वा केवलस्यौषधस्य वा ।
अयोगस्तेन निष्ठीवकण्डूकोठज्वरादयः ॥ २७

॥ सम्यग्योगलक्षणम् ॥

निर्विबन्धं प्रवर्तन्ते कफपित्तानिलाः क्रमात् ।
सम्यग्योगे

॥ अतियोगलक्षणम् ॥

अतियोगे तु फेनचन्द्रकरक्तवत् ॥ २८
वमितं क्षामता दाहः कण्ठशोषस्तमो भ्रमः ।
घोरा वाय्वामया मृत्युर्जीवशोणितनिर्गमात् ॥ २९

॥ सम्यग्वमिते उपचारः ॥

सम्यग्योगेन वमिते क्षणमाश्वास्य पाययेत् ।
धूमत्रयस्यान्यतमं स्नेहा[1]चारमथादिशेत् ॥ ३०
ततः सायं प्रभाते वा क्षुद्वान् स्नातः सुखाम्बुना ।
पुराणरक्तशालीनामस्नेहलवणोषणम् ॥ ३१
भुञ्जानो रक्तशाल्यन्नं [2]भजेत् पेयादिकं क्रमात् ।

॥ पेयादिक्रमः ॥

[3]पेयां विलेपीमकृतं कृतं च
यूषं रसं त्रीनुभयं [4]तथैकम् ।
क्रमेण सेवेत नरोऽन्न[5]कालान्
प्रधानमध्यावरशुद्धिशुद्धः ॥ ३२

॥ पेयादिक्रमस्योपपत्तिः ॥

यथाणुरग्निस्तृणगोमयाद्यैः
सन्धुक्ष्यमाणो भवति क्रमेण ।

---

1. च्छाक 2. भवे 3. विलपेदस्कृतं कृतं
4 वृषैक 5 बालान्

महान् स्थिरः सर्वपचस्तथैव
शुद्धस्य पेयादिभिरन्तरग्निः ॥ ३३

॥ प्रवरावरमध्यशोधनलक्षणम् ॥

जगन्यमध्यप्रवरे तु वेगा-
श्चत्वार इष्टा वमने षडष्टौ ।
दशैव ते द्वित्रिगुणा विरेके
*प्रस्थस्तथा स्याद् द्विचतुर्गुणश्च ॥ ३४

पित्तावसानं वमनं विरेका-
दर्धं कफान्तं च विरेकमाहुः ।
द्वित्रान् स[1]विट्कानपनीय वेगान्
[2]मेयं विरेके वमने तु [3]पीतम् ॥ ३५

॥ इति चिकित्सातिलके विरेकाध्याये वमनवर्गः ॥

* * *

## ॥ अथ विरेचनवर्गः ॥

अथैनं वामितं भूयः स्नेहस्वेदोपपादितम् ।
श्लेष्मकाले [4]गते ज्ञात्वा कोष्ठं सम्यग्विरेचयेत् ॥ १

॥ मृदुकोष्ठलक्षणम् ॥

बहुपित्तो मृदुः कोष्ठः क्षीरेणापि विरिच्यते ।

॥ क्रूरकोष्ठलक्षणम् ॥

प्रभूतमारुतः क्रूरः [5]कृच्छ्राच्छ्यामादिकैरपि ॥ २

॥ दोषभेदेन द्रव्याणि ॥

कषायमधुरैः पित्ते विरेकः कटुकैः कफे ।
स्निग्धोष्णलवणैर्वायौ

---

* प्रस्थोऽत्र सार्धत्रयोदशपलः । "वमने च विरेके च तथा शोणितमोक्षणे सार्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः" इति स्मरणात् ।

1 निष्कानच  2 नेयं  3 पित्तम्
4 गरे  5 कृच्छ्राच्छ्यामा

॥ अप्रवृत्त्यादिषु क्रमः ॥

अप्रवृत्तौ तु पाययेत् ॥ ३

उष्णाम्बु; स्वेदयेदस्य पाणितापेन चोदरम् ।

उत्थाने [1]ऽल्पे दिने तस्मिन् भुक्त्वान्येद्युः पुनः पिबेत् ॥ ४

अदृढस्नेहकोष्ठस्तु पिबेदूर्ध्वं दशाहतः ।

भूयोऽप्युपस्कृततनुः स्नेहस्वेदैर्विरेचनम् ॥ ५

यौगिकं सम्यगालोच्य स्मरन् पूर्वमतिक्रमम् ।

॥ अयोगलक्षणम् ॥

हृत्कुक्ष्यशुद्धिररुचिरुत्क्लेशः श्लेष्मपित्तयोः ॥ ६

कण्डूर्विदाहः पिटकाः पीनसो वातविड्ग्रहः ।

अयोगलक्षणं

॥ सम्यग्योगलक्षणम् ॥

योगो वैपरीत्ये यथोदितात् ॥ ७

॥ अतियोगलक्षणमुपद्रवाश्च ॥

विट्पित्तकफवातेषु [2]निःसृतेषु क्रमात् स्रवेत् ।

विश्लेष्मपित्तमुदकं [3]श्वेतं कृष्णं सलोहितम् ॥ ८

मांसधावनतुल्यं वा मेदः[4]खण्डाभमेव वा ।

[5]गुदनिस्सरणं तृष्णा भ्रमो नेत्रप्रवेशनम् ॥ ९

भवन्त्यतिविरिक्तस्य तथातिवमनामयाः ।

॥ सम्यग्विरिक्तस्योपचारः ॥

सम्यग्विरिक्तमेनं च वमनोक्तेन योजयेत् ॥ १०

धूम[6]वर्ज्येन विधिना ततो वमितवानिव ।

क्रमेणान्नानि भुञ्जानो [7]भजेत् प्रकृतिभोजनम् ॥ ११

---

1 तु 2 निष्ठ्यूतेषु 3 श्वेतं 4 खण्डकवमे
5 गर 6 वर्जेन 7 भवेत्

॥ पीतौषधा लङ्घनीयाः ॥

मन्दवह्निमसंशुद्धमक्षामं [1]दोषदुर्बलम् ।
अदृष्टजीर्णलिङ्गं च लङ्घयेत् [2]पीतमेषजम् ॥ १२
स्नेहस्वेदौषधोत्क्लेशसंगैरिति न बाध्यते ।

॥ पेयानर्हेषूपचारः ॥

सुताल्पपित्तश्लेष्माणं मद्यपं वातपैत्तिकम् ॥ १३
पेयां न पाययेत् तेषां *तर्पणादिक्रमो मतः ।

॥ वमनविरेचनदोषनिर्हरणकालः ॥

अपक्वं वमनं दोषान् पच्यमानं विरेचनम् ॥ १४
निर्हरेद् वमनस्यातः पाकं न प्रतिपालयेत् ।

॥ भोज्यरेचनीयाः ॥

दुर्बलो बहुदोषश्च दोषपाकेन यः स्वयम् ॥ १५
विरिच्यते भेदनीयैर्भोज्यै[3]स्तमुपपादयेत् ।

॥ मृद्वल्पौषधार्हाः ॥

दुर्बलः शोधितः पूर्वमल्पदोषः कृशो नरः ॥ १६
अपरिज्ञातकोष्ठश्च पिबेन्मृद्वल्पमौषधम् ।
[4]वरं तदसकृत् पीतमन्यथा संशयावहम् ॥ १७
हरेद् बहूंश्चलान्[5] दोषानल्पानल्पान् पुनः पुनः ।
दुर्बलस्य; मृदुद्रव्यैरल्पान् संशमयेत् तु तान् ॥ १८
[6]क्लेशयन्ति चिरं ते हि [7]हन्युर्वैनमनिर्हृताः ।

---

1 क्षीमं 2 स्वथ

* "लाजसक्तून् पिबेत् पूर्वं ततो यूषान्नभोजनम् । पश्चान्मांसरसान्नं च तर्पणादिरयं क्रमः ॥ इति तर्पणादिक्रमस्वरूपमुन्नेयम् ॥

3 र्भोज्यै 4 दरं 5 दृढश्चला

6 क्लेवं कृशी 7 हन्यान्दैनि

॥ मन्दाग्न्यादेः शोधनविधिः ॥

मन्दाग्निं क्रूरकोष्ठं च [1]सक्षारलवणैर्घृतैः ॥ १९

संधुक्षिताग्निं विजित[2]कफवातं च शोधयेत् ।

॥ रूक्षादीनां रेचनविधिः ॥

रूक्षवह्[3]निलक्रूरकोष्ठव्यायामशीलिनाम् ॥ २०

दीप्ता[4]ग्नीनां च भैषज्यमविरेच्यैव जीर्यते ।

तेभ्यो वस्तिं पुरा दद्यात् ततः स्निग्धं विशोधयेत् ॥ २१

शकृन्निर्हृत्य वा किञ्चित् तीक्ष्णाभिः फलवर्तिभिः ।

प्रवृत्तं हि मलं स्निग्धो विरेको निर्हरेत् सुखम् ॥ २२

॥ नातिस्निग्धशोध्याः ॥

विषाभिघात[5]पिडकाकुष्ठशोफविसर्पिणः ।

कामिलापाण्डुमेहार्तान् नातिस्निग्धान् विशोधयेत् ॥ २३

॥ स्नेहरूक्षद्रव्यरेचनीयाः ॥

सर्वान् स्नेहविरेकैस्तु रूक्षैस्तु स्नेहभावितान् ।

॥ कर्मणां मध्ये स्नेहस्वेदविधिः ॥

कर्मणां वमनादीनां पुनरप्यन्तरेऽन्तरे ॥ २४

स्नेहस्वेदौ प्रयुञ्जीत स्नेहमन्ते बलाय च ।

॥ स्नेहस्वेदयोः प्रशस्तिः ॥

ऊष्मादिर्मिथ्योत्क्लेश्य [6]ह्रियते वाससो मलः ॥ २५

तथैव वपुषः स्नेहस्वेदमाषतिलादिभिः ।

स्नेहस्वेदावनभ्यस्य कुर्यात् संशोधनं तु यः ॥ २६

दारु शुष्कमिवानामे शरीरं तस्य [7]दीर्यते ।

---

1 सक्षारै 2 भ [अ] हातं 3 नल 4 नग्नि
5 पीडिका 6 ह्रीयते 7 जीर्यति

॥ संशोधनप्रशंसा ॥

बुद्धिप्रसादं बलमिन्द्रियाणां
धातुस्थिरत्वं ज्वलनस्य दीप्तिम् ।
चिराच्च पाकं वयसः करोति
संशोधनं सम्यगुपास्यमानम् ॥ २७

इति श्रीश्रीनिवासपण्डितविरचिते चिकित्सातिलके
सूत्रस्थाने विरेकविधिर्नाम द्वाविंशोऽध्यायः ॥

---

## ॥ अथ त्रयोविंशोऽध्यायः ॥

॥ अथातो वमनकल्पं व्याख्यास्यामः ॥

॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥

### ॥ मदनकल्पः ॥

### ॥ तत्र मदनत्रिवृतोः प्रशंसा ॥

वमने मदनं श्रेष्ठं त्रिवृन्मूलं विरेचने ।
नित्यमन्यस्य तु व्याधिविशेषेण विशिष्टता ॥ १

### ॥ मदनफलसंस्करणम् ॥

फलानि नाति पाण्डूनि न चातिहरितान्यपि ।
आदायाह्नि प्रशस्तर्क्षे मध्ये ग्रीष्मवसन्तयोः ॥ २
प्रमृज्य कुशमूतोल्यां क्षिप्त्वा बध्वा प्रलेपयेत् ।
गोमयेनानु [1]मृतोलीं धान्यमध्ये निधापयेत् । ३
मृदुभूतानि मध्विष्टगन्धानि कुशवेष्टनात् ।
विकृष्टानि [2]गतेऽष्टाहे शोषयेत् तान्यथातपे ॥ ४
तेषां ततः सुशुष्काणामुद्धृत्य फलपिप्पलीः ।
दधिमध्वाज्यपललैर्मृदित्वा शोषयेत् पुनः ॥ ५
ततः सुगुप्तं संस्थाप्य कार्यकाले प्रयोजयेत् ।

### ॥ मदनप्रयोगक्रमः ॥

अथादाय ततो मात्रां झर्झरीकृत्य वासयेत् ॥ ६
शर्वरीं मधुयष्ट्या वा कोविदारस्य वा रसे ।
मधूकपुष्पसारे वा द्राक्षायाः स्वरसेऽपि वा ॥ ७
ततः पिबेत् कषायं तं प्रातर्मृदितगालितम् ।
वमनोक्तेन विधिना साधु तेन तदा वमेत् ॥ ८

---

1 मृतोलिं 2 गतेष्वाते

॥ विशेषतश्छर्दनीयाः ॥

श्लेष्मज्वरप्रतिश्यायगुल्मान्तर्विद्रधीषु तु ।
प्रच्छर्दयेद् विशेषेण यावत् पित्तस्य दर्शनम् ॥ ९

॥ ज्वरारुच्यादिषु कल्पना ॥

फलपिप्पलीचूर्णं वा क्राथेन स्वेन भावितम् ।
त्रिभागत्रिफलाचूर्णं कोविदारादिवारिणा ॥ १०
पिबेज्ज्वरारुचिष्ठीवप्रन्थ्यपच्यर्बुदोदरी ।

॥ कफस्थानगपित्ते कल्पना ॥

पित्ते कफस्थानगते [1]जीमूतादिजले पिबेत् ॥ ११

॥ हृदाहादौ कल्पना ॥

हृद्दाहेऽयासपित्ते च क्षीरं तत्पिप्पली[2]शृतम् ।

॥ कफच्छर्द्यादौ कल्पना ॥

क्षैरेयं वा कफच्छर्दि[3]प्रसेकतमकेषु तु ॥ १२
[4]दध्युत्तरं वा दधि वा तच्छृतक्षीरसंभवम् ।

॥ कफदूषिताग्न्यादौ कल्पना ॥

फलादिकाथकल्काभ्यां सिद्धं [5]तत्सिद्धदुग्धजम् ॥ १३
सर्पिः [6]कफाभिभूतेऽग्नौ शुष्यद्देहे च [7]वामनम् ।

॥ संतर्पणव्यापदि कल्पना ॥

वत्सका[8]दिप्रतीवापः कषायः फल[9]मज्जजः ॥ १४
निम्बार्कान्यतरक्राथसमायुक्तो नियच्छति ।
बद्धमूलानपि व्याधीन्[10] सर्वान् सन्तर्पणो[11]त्थितान् ॥ १५

॥ आघ्राणवमनयोगः ॥

[12]राठपुष्पफलश्लक्ष्णचूर्णैर्माल्यं सुरूषितम् ।
वमेन्मण्डरसादीनां जिघ्रंस्तृप्तः सुखी सुखम् ॥ १६

---

1 जीमूतादि 2 शृतम् 3 प्रचेत 4 दध्युत्तरमिव
5 तत्सिद्ध 6 कफादिभूतेऽग्नौ 7 वामनम् 8 दिप्रतीपापः
9 मज्जजः 10 न्स तान्स 11 क्षितान् 12 फल

॥ पुष्पादिष्वतिदेशः ॥

एवमेव फलाभावे कल्प्यं पुष्पं शलाटु वा ।

॥ इति मदनकल्पः ॥

* * *

## ॥ अथ जीमूतकल्पः ॥

॥ जीमूतविषयाः ॥

[1]जीमूताद्याश्च फलवज्जीमूतं च विशेषतः ॥ १७
प्रयोक्तव्यं ज्वर[2]श्वासकासहिध्मादिरोगिणाम् ।

॥ अवस्थाभेदेन जीमूतकल्पः ॥

पयः [3]पुष्पेऽस्य; निर्वृत्ते फले पेया [4]पयस्कृता ॥ १८
लोमशे क्षीरसन्तानं दध्युत्तरमलोमशे ।
शृते पयसि दध्यम्लं जातं हरितपाण्डुके ॥ १९

॥ ज्वरे जीमूतकल्पना ॥

जीमूतकल्कं चूर्णं वा पिबेच्छीतेन वारिणा ।
ज्वरे [5]पैत्ते कवोष्णेन कफवातात् कफादपि ॥ २०

॥ इति जीमूतकल्पः ॥

* * *

## ॥ अथेक्ष्वाकुकल्पः ॥

॥ इक्ष्वाकुविषयाः ॥

कासश्वासज्वरच्छर्दि[6]विषार्ते कफकर्शिते ।
इक्ष्वाकुर्वमने शस्तः प्रताम्यति च [7]मानवे ॥ २१

॥ पित्तश्लेष्मज्वरे कल्पना ॥

फलपुष्पविहीनस्य प्रवालैस्तस्य साधितम् ।
पित्तश्लेष्मज्वरे क्षीरं पित्तोद्रिक्ते प्रयोजयेत् ॥ २२

---

1 जीमूताद्याश्च 2 कास 3 पुष्पेऽस्यनिर्वृत्ते 4 पयस्कृता
5 पैत्य 6 विषार्तैः 7 मानवे

॥ कफकासादौ कल्पना ॥

[1]हृतमध्ये फले जीर्णे स्थितं क्षीरं [2]यदा दधि ।
[3]स्यात् तदा कफजे श्वासे कासे [4]वम्यां च पाययेत् ॥ २३

॥ पाण्डुकुष्ठादौ कल्पना ॥

मस्तुना वा फलान्मध्यं पाण्डुकुष्ठविषार्दितः ।
तेन तक्रं विपक्वं वा पिबेत् समधुसैन्धवम् ॥ २४

॥ इतीक्ष्वाकुकल्पः ॥

* * *

## ॥ अथ धामार्गवकल्पः ॥

॥ धामार्गवविषयाः ॥

[5]धामार्गवो गदेष्विष्टः स्थिरेषु च महत्सु च ।

॥ कासादौ कल्पनाः ॥

[6]वीराशतावरीयष्टीरजोभिश्च पृथक्पृथक् ॥ २५
[7]तद्रजःसहिता लेह्या [8]धामार्गवरजोऽन्विताः ।
कासे हृदयदाहे च शस्ता मधुसितायुताः ॥ २६

॥ सपित्तोष्मणि कफे कल्पना ॥

ते सुखाम्भोऽनुपानाः स्युः पित्तोष्णसहिते कफे ।

॥ स्तन्यविषे कल्पना ॥

धान्यतुम्बुरुयूषेण कल्कः स्तन्यविषापहः ॥ २७

॥ इति धामार्गवकल्पः ॥

* * *

## ॥ अथ कुटजकल्पः ॥

॥ कुटजविषयाः ॥

कुटजः सुकुमारेषु पित्तरक्तकफोदये ।
ज्वरे विसर्पे हृद्रोगे [9]खुडे कुष्ठे च पूजितः ॥ २८

---

1 हृतमध 2 यथाविधि 3 स्यात्तथा 4 द्वाम्यं
5 धामागवो 6 विरा 7 तद्रजो 8 धामार्गवर 9 स्वण्डे

॥ कुटजप्रयोगभेदाः ॥

सर्षपाणां मधूकानां तोयेन लवणस्य वा ।
पाययेत् कौटजं बीजं युक्तं तु सुरयाथवा ॥ २९

॥ वमनकल्पोपसंहारः ॥

वमनौषधमुख्यानामिति कल्पदृगीरिता ।
बीजेनानेन मतिमानन्यानपि च कल्पयेत् ॥ ३०

॥ इति श्रीश्रीनिवासपण्डितविरचितचिकित्सातिलके सूत्रस्थाने
वमनकल्पो नाम त्रयोविंशोऽध्यायः ॥

---

## ॥ अथ चतुर्विंशोऽध्यायः ॥

### ॥ अथातो विरेककल्पं व्याख्यास्यामः ॥

॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥

### ॥ त्रिवृत्कल्पः ॥

#### ॥ त्रिवृद्गुणाः ॥

कषायमधुरा रूक्षा विपाके कटुका त्रिवृत् ।
कफपित्तप्रशमनी [1]रौक्ष्याच्चानिलकोपनी ॥ १

#### ॥ त्रिवृतः सर्वरोगजित्त्वम् ॥

सेदानीमौषधैर्युक्ता वातपित्त[2]कफापहैः ।
कल्पवैशेष्यमासाद्य जायते सर्वरोगजित् ॥ २

#### ॥ त्रिवृद्भेदौ ॥

[3]द्विधा द्व्याख्यं च तन्मूलं श्यामं [4]श्यामारुणं त्रिवृत् ।

#### ॥ अरुणस्य गुणाः ॥

[5]त्रिवृदाख्यं वरतरं निरपायं सुखं तनोः ॥ ३
सुकुमारे [6]शिशौ वृद्धे मृदुकोष्ठे च तद्धितम् ।

#### ॥ श्यामस्य गुणाः ॥

मूर्छासंमोहहृत्कण्ठकषणक्षणनप्रदम् ॥ ४
श्यामं तीक्ष्णाशुकारित्वादतस्तदपि शस्यते ।
क्रूरकोष्ठे बहौ दोषे क्लेशक्षमिणि चातुरे ॥ ५

#### ॥ त्रिवृद्ग्रहणविधिः ॥

गम्भीरानुगतं श्लक्ष्णमतिर्यग्विसृतं च यत् ।
गृहीत्वा विसृजेत् काष्ठं त्वचं शुष्कां निधापयेत् ॥ ६

---

1. रौक्ष्यौ 2. कफापहा 3. त्रिवृदाख्यं च
4. श्यामारुणोवृत् 5. वृत्रदाख्यं 6. शिशो

॥ वातरोगे त्रिवृत्कल्पनम् ॥

अथ काले ततश्चूर्णं किञ्चिन्नागरसैन्धवम् ।
वातामये [1]पिबेदम्लैः

॥ पित्तरोगे त्रिवृत्कल्पनम् ॥

[2]पैत्ते साज्यसितामधु ॥ ७
क्षीरद्राक्षेक्षु[3]काश्मर्यस्वादु[4]स्कन्धवरारसैः ।

॥ कफरोगे त्रिवृत्कल्पः ॥

कफामये पीलुरसमूत्रमद्याम्लकाञ्जिकैः ॥ ८
पञ्चकोलादिचूर्णैश्च युक्त्या युक्तं [5]कफापहैः ।

॥ त्रिवृल्लेहः ॥

त्रिवृत्कल्ककषायेण साधितः ससितो हिमः ॥ ९
मधुत्रिजातसंयुक्तो लेहो हृद्यं विरेचनम् ।

॥ अजगन्धादिचूर्णं ॥

अजगन्धा तुगाक्षीरी विदारी [6]शर्करा त्रिवृत् ॥ १०
चूर्णितं मधुसर्पिर्भ्यां [7]लीढ्वा साधु विरिच्यते ।
सन्निपातज्वरस्तम्भपिपासादाहपीडितः ॥ ११

॥ त्रिवृदिक्षुपुटपाकः ॥

लिम्पेदन्तस्त्रिवृतया द्विधा कृत्वेक्षुदण्डकम् ।
एकीकृत्य च तत् स्विन्नं पुटपाकेन भक्षयेत् ॥ १२

॥ त्रिवृत्तर्पणयोगः ॥

[8]भृङ्गैलाभ्यां समा नीली तैस्त्रिवृत् तैश्च शर्करा ।
चूर्णं फलरसक्षौद्रसक्तुभिस्तर्पणं पिबेत् ॥ १३
वातपित्तकफोत्थेषु रोगेष्वल्पानलेषु च ।
नरेषु सुकुमारेषु निरपायं विरेचनम् ॥ १४

---

1. विमेचकैः 2. पैत्वे 3. काश्मर्यं 4. स्कन्द
5. कफावहैः 6 कर्करा 7 लिह्वा 8 पकाभ्यां समानिपीते

॥ विडङ्गतण्डुलादिलेहः ॥

[1]विडङ्गतण्डुलवरायावशूककणात्रिवृत् ।
सर्वतोऽर्धेन तल्लीढं मध्वाज्येन गुलेन वा ॥ १५
गुल्मं प्लीहोदरं कासं [2]हलीमकमरोचकम् ।
कफवातकृतांश्चान्यान् [3]परिमार्ष्टि गदान् बहून् ॥ १६

॥ कल्याणकगुडः ॥

विलङ्गपिप्पलीमूलत्रिफलाधान्यचित्रकान् ।
मरिचेन्द्रयवाजाजीपिप्पलीहस्तिपिप्पली: ॥ १७
दीप्यकं पञ्चलवणं चूर्णितं कार्षिकं पृथक् ।
तिलतैल[4]त्रिवृच्चूर्णभागौ चाष्टपलोन्मितौ ॥ १८
धात्रीफलरसप्रस्थांस्त्रीन् गुडार्धतुलान्वितान् ।
पक्वान् मृद्वग्निना खादेत् ततो मात्रामयन्त्रणः ॥ १९
कुष्ठार्शः[5]कामिलागुल्ममेहोदर[6]भगन्दरम् ।
ग्रहणीं पाण्डुरोगं च हन्ति [7]पुंसवनश्च सः ॥ २०
गुडः कल्याणको नाम सर्वेष्वृतुषु [8]यौगिकः ।

॥ व्योषादिगुलिका* ॥

व्योषत्रिजातकाम्भोदक्रिमिघ्नामलकैस्त्रिवृत् ॥ २१
[9]सर्वैः समा समसिता क्षौद्रेण गुलिकाः कृताः ।
तृष्णाकृच्छ्रज्वरच्छर्दिकासशोषभ्रमक्षये ॥ २२
तापे [10]पाण्ड्वामयेऽल्पेऽग्नौ शस्ताः सर्व[11]विषेषु च ।

॥ वर्षतौ त्रिवृत्कल्पना ॥

त्रिवृता कौटजं बीजं पिप्पली विश्वभेषजम् ॥ २३
क्षौद्रद्राक्षारसोपेतं वर्षाकाले विरेचनम् ।

---

1 विभङ्ग 2 हलीमधुकरोचकम् 3 परिमार्ष्टि 4 त्रिवृच्चूर्णं
5 कामला 6 भगन्धरम् 7 पुंसवनं च नः 8 योगिनः
* इयमेव व्योषादिगुलिका क्वचिद्विपत्तिगुलिकेति व्यवह्रियते ।
9 सर्वे समास्समसिता 10. पाण्ड्वामयत्वेऽग्नौ 11. विषूचिषु

॥ शरदि त्रिवृत्कल्पना ॥

त्रिवृद्दुरालभामुस्ता[1]शर्करोदीच्यचन्दनम् ॥ २४

द्राक्षाम्बुना सयष्ट्याह्व[2]सातलं जलदात्यये ।

॥ हेमन्ते त्रिवृत्कल्पना ॥

त्रिवृतं चित्रकं पाठामजाजीं सरळं वचाम् ॥ २५

[3]स्वर्णक्षीरीं च हेमन्ते चूर्णमुष्णाम्बुना पिबेत् ।

॥ ग्रीष्मे त्रिवृत्कल्पना ॥

त्रिवृता शर्करातुल्या ग्रीष्मकाले विरेचनम् ॥ २६

॥ सर्वर्तुकत्रिवृत्कल्पना ॥

त्रिवृत्त्रायन्तिहपुषासातलाकटुरोहिणीः ।

स्वर्णक्षीरीं च संचूर्ण्य गोमूत्रे भावयेत् त्र्यहम् ।

एष सर्वर्तुको योगः स्निग्धानां मलदोषहृत् ॥ २७

॥ इति त्रिवृत्कल्पः ॥

* * * *

## ॥ अथ राजवृक्षकल्पः ॥

॥ राजवृक्षविषयाः ॥

राजवृक्षोऽधिकं पथ्यो मृदुर्मधुरशीतलः ।

बाले वृद्धे क्षते क्षीणे सुकुमारे च मानवे ॥ २८

योज्यो मृद्वनपायित्वाद् विशेषाच्चतुरङ्गुलः ।

॥ राजवृक्षग्रहणविधिः ॥

फलकाले परिणतं फलं तस्य समाहरेत् ॥ २९

तेषां गुणवतां भारं सिकतासु विनिक्षिपेत् ।

सप्तरात्रात् समुद्धृत्य शोषयेदातपे ततः ॥ ३०

ततो मज्जानमुद्धृत्य शुद्धे पात्रे निधापयेत् ।

॥ दाहादौ चतुरङ्गुलकल्पना ॥

द्राक्षारसेन तं दद्याद् दाहोदावर्तपीडिते ॥ ३१

चतुर्वर्षे सुखं बाले [4]यावद् द्वादशवार्षिके ।

चतुरङ्गुलमज्जो वा कषायं पाययेद्धिमम् ॥ ३२

1. शर्करो दिव्यचन्दनम् 2. सातलं जलदात्यये 3. स्वर्णक्षिति 4 यावद्वा वत

॥ दधिमण्डादिभिः प्रयोगः ॥

दधिमण्डसुरामण्डधात्रीफलरसैः पृथक् ।
[1]सौवीरकेण वा युक्तः कल्केन त्रैवृतेन वा ॥ ३३

॥ हरीतक्यां त्रिवृत्कल्पातिदेशः ॥

हरीतकीमपि त्रिवृद्विधानेनैव कल्पयेत् ।

॥ प्राधान्यसङ्ग्रहः ॥

प्रधानस्तिल्वकस्त्वक्षु फलेषु च हरीतकी ॥ ३४
तैलेष्वेरण्डतैलं च स्वरसे कारवल्लिका ।
सुधापयः पयस्सूक्तमिति प्राधान्यसंग्रहः ॥ ३५

॥ विसर्पादौ त्रिवृत्कल्पना ॥

त्रिवृत्कल्ककषायाभ्यां [2]चक्रतैलं विपाचयेत् ।
सर्पिश्च पक्वं वीसर्पकण्डू[3]दाहाल्जीर्जयेत् ॥ ३६
मेहगुल्मानिलश्लेष्म[4]प्रशस्तं तैलमेव [5]तु ।
चतुस्स्नेहः स [6]हृच्छुक्रवातसंरोधजान् गदान् ॥ ३७

॥ शम्याकादिस्नेहकल्पनाः ॥

एवं शम्याक[7]त्रिफलाशङ्खिनीतिल्वकेष्वपि ।
स्वरसे कारवल्ल्याश्च स्नुक्क्षीरे च पृथक्पृथक् ॥ ३८
चक्रतैलं [8]विपाच्याथ तत्तद्रोगेषु योजयेत् ।
एवं सर्पिश्च यमकं महास्नेहं त्रिवृत्क्रमात् ॥ ३९

॥ विरेचनयोगीन्यनुपानानि ॥

धात्री[9]फलाम्रातककोलदाडिमैः
[10]सितोपलामाक्षिकमातुलुङ्गैः ।
मद्येन [11]तैस्तैश्च मनोऽनुकूलै-
र्युक्तानि देयानि विरेचनानि ॥ ४०

इति श्रीश्रीनिवासपण्डितविरचितचिकित्सातिलके सूत्रस्थाने
विरेचनकल्पो नाम चतुर्विंशोऽध्यायः ॥

1 सद्विरफेन 2 चक्र ताविपाचयेत् 3 दाहाकजिर्जयेत् 4 विवर्ण
5 च 6 हृच्चक्र 7 त्रिफले 8 विपक्वाथ
9 फलाम्रातक 10 शीतोपला 11 तैश्चिश्च

## ॥ अथ पञ्चविंशोऽध्यायः ॥

॥ अथातो वमनविरेचनव्यापत्सिद्धिं व्याख्यास्यामः ॥

॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥

**॥ अतियोगे धातुस्रावः ॥**

बहुतीक्ष्णं क्षुधार्तस्य मृदुकोष्ठस्य भेषजम् ।
[1]हत्वाशु विट्पित्तकफान् [2]धातूनास्रावयेद् द्रवान् ॥ १

**॥ तत्र चिकित्सा ॥**

तत्रातियोगे मधुरैः शेषमौषधमुल्लिखेत् ।
[3]योज्योऽतिवमने रेको विरेके वमनं मृदु ॥ २
परिषेकावगाहाद्यैः सुशीतैः स्तम्भयेच्च तम् ।
घृताभ्यक्तं सुशीताम्बुस्नेहक्षौद्रसितायुतैः ॥ ३
लेहैरुपाचरेद् वैद्यो हृद्यैर्वान्तिहरौषधैः ।
पिबेद् वा शर्कराक्षौद्रं घृतं वान्तिहरौषधैः ॥ ४

**॥ अञ्जनादिमन्थः ॥**

अञ्जनं [4]चन्दनोशीरमज्जासृक्शर्करोदकम् ।
लाजाचूर्णैः पिबे[5]न्मन्थमतियोगहरं परम् ॥ ५

**॥ वमनातियोगे विशेषोपक्रमः ॥**

वमनस्यातियोगे तु शीताम्बुपरिषेचितः ।
पिबेत् फलरसै[6]र्मन्थं सघृतक्षौद्रशर्करम् ॥ ६

**॥ उद्गारादौ चिकित्सा ॥**

सोद्गारायां भृशं छर्द्यां मूर्च्छायां धान्यमुस्तयोः ।
समधूकाञ्जनं चूर्णं लेहयेन्मधुसंयुतम् ॥ ७

---

1. हृत्वाशु 2. धातूनां स्रावयेत् 3. योज्योऽतिवमने रेकि
4. चन्दनोशीरं मज्जा 5. मण्ड 6. र्मन्थं

॥ अन्तर्जिह्वाग्रहे उपक्रमः ॥

वमतोऽन्तः प्रविष्टायां जिह्वायां कवलग्रहाः ।
स्निग्धाम्ललवणा [1]हृद्या यूषमांसरसा हिताः ॥ ८
फलान्यम्लानि खादेयुस्तस्य चान्येऽग्रतो नराः ।

॥ जिह्वानिःसरणे चिकित्सा ॥

[2]निःसृतां तु तिलद्राक्षाकल्कलिप्तां प्रवेशयेत् ॥ ९

॥ वाग्ग्रहादावुपक्रमः ॥

वाग्ग्रहानिलरोगेषु घृतमांसोपसाधिताम् ।
यवागूं तनुकां दद्यात् स्नेहस्वेदौ च कालवित् ॥ १०

॥ जीवादानम् ॥

अतियोगाच्च भैषज्यं जीवं हरति शोणितम् ।
त[3]ज्जीवादानमित्युक्त[4]मादत्ते जीवनं यतः ॥ ११

॥ जीवशोणितपित्तयोर्विवेचनम् ॥

शुने काकाय वा दद्यात् तेनान्नमसृजा सह ।
भुक्तेऽभुक्ते वदेज्जीवं पित्तं वा भेषजेरितम् ॥ १२

॥ प्रकारान्तरेण परीक्षा ॥

[5]शुक्लं वा भावितं वस्त्र[6]मावानं कोष्णवारिणा ।
प्रक्षालितं विवर्णं स्यात् पित्ते ; शुद्धं तु शोणिते ॥ १३

॥ जीवादाने चिकित्सा ॥

तृष्णामूर्च्छामदार्तस्य कुर्या[7]दामरणात् क्रियाम् ।
रक्तपित्तातिसारघ्नीं तस्याशु प्राणरक्षणीम् ॥ १४
मृगगोमहिषाजानां [8]सद्यस्कं जीवतामसृक् ।
पिबेज्जीवानुसन्धानं जीवं [9]तद्ध्याशु गच्छति ॥ १५

---

1 हृष्या 2 निःसृतान्त 3 तं जीवाधाव
4 माधत्ते 5 शुक्ल भावित 6 आधाने
7 द्वामरण 8 सद्यस्थं 9 तस्याशु

॥ तत्र वस्तिप्रयोगाः ॥

तदेव [1]दर्भमृदितं रक्तं वस्तौ निषेचयेत् ।
[2]श्यामाकाश्मर्यमधुक[3]दूर्वोशीरैः श्रुतं पयः ॥ १६

घृतमण्डाञ्जनयुतं वस्तिं वा योजयेद्धिमम् ।
* [4]पिच्छावस्तिं सुशीतं वा घृत[5]मण्डानुवासनम् ॥ १७

॥ गुदभ्रंशे चिकित्सा ॥

गुदं भ्रष्टं कषायैश्च स्तम्भयित्वा प्रवेशयेत् ।
पद्मकोशीरनागाह्वचन्दनानि प्रयोजयेत् ॥ १८

अतियोगे [6]च रेकस्य [7]पानलेपनसेचनम् ।

॥ संज्ञानाशे उपचारः ॥

विसंज्ञं श्रावयेत् सामवेणुगीतादिनिस्वनम् ॥ १९

इति श्रीश्रीनिवासपण्डितविरचिते चिकित्सातिलके
सूत्रस्थाने वमनविरेकव्यापत्सिद्धिर्नाम पञ्चविंशोऽध्यायः ॥

---

1 गर्भ  2 श्यामा  3 मूर्वाजीरैः  4 पिच्छा वस्ति

* पिच्छावस्तिलक्षणं च "परिवेष्ट्य कुशैरार्द्रैरार्द्रवृन्तानि शाल्मलेः । कृष्णमृत्तिकयाऽऽलिप्य स्वेदयेद्गोमयाग्निना । मृच्छोषे तानि संक्षुद्य तत्पिण्डं मुष्टिसंमितं । मर्दयेत् पयसः प्रस्थे पूतेनास्थापयेत्ततः । नतयष्ट्याह्वकल्काज्यक्षौद्रतैलवतान्तु च । स्नातो भुञ्जीत पयसा आङ्गलेन रसेन वा । पित्तातिसारज्वरशोफगुल्मसमीरणास्रग्रहणीविकारान् । जयत्ययं शीघ्रमतिप्रवृत्तिं विरेचनास्थापनयोश्च वस्तिः" इत्यतिसारनिर्दिष्टं ज्ञेयम् ॥

5 मन्द  6 तु  7 सेचने

## ॥ अथ षड्त्रिंशोऽध्यायः ॥

### ॥ अथातो वस्तिविधिं व्याख्यास्यामः ॥

इति ह स्माहुरात्रेयादयो महर्षयः ॥

#### ॥ वस्तिविषयाः ॥

वातोल्बणेषु रोगेषु वाते वा वस्तिरिष्यते ।
उपक्रमाणां सर्वेषामग्रणीः

#### ॥ वस्तेस्त्रैविध्यम् ॥

त्रिविधश्च सः ॥ १
निरूहोऽन्वासनं वस्तिरुत्तरः

#### ॥ निरूहसाध्याः ॥

तेन साधयेत् ।
गुल्मानाहखुडप्लीहशुद्धातीसारशूलिनः ॥ २
जीर्णज्वरप्रतिश्यायशुक्रानिलमलग्रहान् ।
[1]वर्ध्माश्मरीरजोनाशान् दारुणान् वानिलामयान् ॥ ३

#### ॥ आस्थापनानर्हाः ॥

[2]अनास्थाप्यास्त्वतिस्निग्धः क्षतोरस्को भृशं कृशः
आमातीसार[3]वमिमान् संशुद्धो दत्त[4]नावनः ॥ ४
श्वासकासप्रसेकार्शोहिध्माध्मानाल्पवह्नयः ।
शूनपायुः कृताहारो [5]बद्धच्छिद्रोदको[6]दरी ॥ ५
कुष्ठी च मधुमेही च [7]मासान् सप्त च गर्भिणी ।

#### ॥ अनुवासनीयाः ॥

आस्थाप्या एव चान्वास्या विशेषादतिवह्नयः ॥ ६
रूक्षाः केवलवातार्ताः

---

1 पद्माश्मरी 2 अनास्थाप्य 3 वमिथान् 4 नाशनः
5 भग्न 6 दरः 7 मांसान्

॥ अनुवासनानर्हाः ॥

नानुवास्यास्त एव च ।

येऽनास्थाप्यास्तथा पाण्डुकामिलामेहपीनसाः ॥ ७

निरन्नप्लीहविड्भेदगुरुकोष्ठकफोदराः ।

अभिष्यन्दिभृशस्थूलक्रिमिकोष्ठाढ्यमारुताः ॥ ८

पीते गरे विषेऽपच्यां [1]श्लीपदी गलगण्डवान् ।

॥ निरूहानुवासनयन्त्रलक्षणम् ॥

तयोस्तु नेत्रं हेमादिधातुदार्वस्थिवेणुजम् ॥ ९

[2]गोपुच्छाकारमच्छिद्रं श्लक्ष्णर्जु गुलिकामुखम् ।

॥ नेत्रप्रमाणम् ॥

ऊनेऽब्दे पञ्च ; पूर्णेऽस्मिन्ना सप्तम्योऽङ्गुलानि षट् ॥ १०

सप्तमे सप्त ; तान्यष्टौ द्वादशे ; षोडशे नव ।

[3]द्वादशैव परं विंशाद् ; वीक्ष्य वर्षान्तरेषु च ॥ ११

वयोबलशरीराणि प्रमाणमभिवर्धयेत् ।

॥ यन्त्रस्थौल्यप्रमाणं ॥

स्वाङ्गुष्ठेन समं मूले स्थौल्येनाग्रे कनिष्ठया ॥ १२

॥ मूलच्छिद्रप्रमाणम् ॥

पूर्णेऽब्देऽङ्गुलमादाय तदर्धार्धप्रवर्धितम् ।

त्र्यङ्गुलं परमच्छिद्रं मूले

॥ अग्रच्छिद्रप्रमाणम् ॥

अग्रे [4]वहते तु यत् ॥ १३

मुद्गं माषं कलायं तक्लिन्नं [5]कर्कन्धुकं क्रमात् ।

॥ कर्णिकास्थापनादि ॥

मूलच्छिद्रप्रमाणेन प्रान्ते घटितकर्णिकम् ॥ १४

---

1 श्लीपथी  2 गोपुच्छाकारमाचीन्न  3 द्वादशे दीपनं
4 वहिते  5 कर्कन्धुकं

वर्त्यग्रे पिहितं मूले यथास्वं द्व्यङ्गुलान्तरम् ।
कर्णिकाद्वितयं नेत्रे कुर्यात्

॥ वस्तिबन्धनम् ॥

तत्र प्रयोजयेत् ॥ १५

[1]अजाविमहिषादीनां वस्तिं सुमृदितं दृढम् ।
[2]कषायरक्तं निच्छिद्रग्रन्थिगन्धशिरं तनुम् ॥ १६
ग्रथितं साधु सूत्रेण सुखं संस्थाप्यभेषजम् ।
वस्त्यभावेऽङ्कपादं वा [3]न्यसेद् वासोऽथवा घनम् ॥ १७

॥ निरूहमानम् ॥

निरूहमात्रा प्रथमे प्रकुञ्चो वत्सरे परम् ।
[4]प्रकुञ्चवृद्धिः प्रत्यब्दं यावत् षट् प्रसृतास्ततः ॥ १८
प्रसृतं वर्धयेदूर्ध्वं द्वादशाष्टादशस्य तु ।
आ सप्ततेरिदं मानं दशैव प्रसृताः परम् ॥ १९

॥ अनुवासनमात्रा ॥

यथायथं निरूहस्य पादो मात्रानुवासने ।

॥ निरूहस्यानुवासनविधिः ॥

आस्थाप्यं स्नेहितं स्विन्नं शुद्धं लब्धबलं पुनः ॥ २०
अन्वासनार्हं विज्ञाय पूर्वमेवानुवासयेत् ।

॥ अनुवासनकालः ॥

शीते वसन्ते च दिवा रात्रौ केचित् ततोऽन्यदा ॥ २१

॥ अनुवासनस्य पूर्वकर्म ॥

अभ्यक्तस्नात[5]मुचितात् पादहीनं हितं लघु ।
अस्निग्धरूक्ष[6]मशितं सानुपानं [7]द्रवादि च ॥ २२

---

1 अजादि 2 ग्रन्थि 3 न्यसेद्वा सैन्धवं
4 प्रकुञ्ज 5 सुषितं 6 असितं 7 प्रसा

[1]कृतचङ्क्रमणं मुक्तविण्मूत्रं शयने सुखे ।
नात्युच्छ्रिते न चोच्छीर्षे [2]संविष्टं वामपार्श्वतः ॥ २३
संकोच्य [3]दक्षिणं सक्थि [4]प्रसार्य च ततः परम् ।

॥ प्रणयनविधिः ॥

अथास्य *नेत्रं प्रणयेत् स्निग्धे स्निग्धमुखं गुदे ॥ २४
उच्छ्वास्य वस्तेर्वदनं बद्ध्वा हस्तमकम्पयन् ।
[5]पृष्ठवंशं प्रति ततो नातिद्रुतविलम्बितम् ॥ २५
नातिवेगं न वा मन्दं सकृदेव प्रपीडयेत् ।
[6]सावशेषं च कुर्वीत वायुः शेषे हि तिष्ठति ॥ २६

॥ दत्तमात्रे पश्चात्कर्म ॥

दत्ते तूत्तान[7]देहस्य पाणिना ताडयेत् [8]स्फिजौ ।
तत्पार्ष्णिभ्यां तथा शय्यां पादतश्च त्रिरुत्क्षिपेत् ॥ २७
ततः [9]प्रसारिताङ्गस्य सोपधानस्य पार्ष्णिके ।
आहन्या[10]न्मुष्टिनाङ्गं च [11]स्नेहेनाक्तं च मर्दयेत् ॥ २८
वेदनार्तमिति स्नेहो न हि शीघ्रं निवर्तते ।

॥ शीघ्रनिवृत्तौ पुनः करणम् ॥

योज्यः शीघ्रं निवृत्तेऽन्यः[12]स्नेहोऽतिष्ठन्न कार्यकृत् ॥ २९
दीप्ताग्निं [13]त्वागतस्नेहं सायाह्ने भोजयेल्लघु ।

॥ निवृत्तिकालो निवर्तनोपायश्च ॥

निवृत्तिकालः परम[14]स्त्रयो यामास्ततः परम् ॥ ३०
अहोरात्रमुपेक्षेत परतः फलवर्तिभिः ।
तीक्ष्णैर्वा वस्तिभिः कुर्याद् यत्नं स्नेहनिवृत्तये ॥ ३१

---

1. कृच्छ्रचङ्क्रमणमुक्तं 2 प्रविष्टं 3 दक्षिणे 4 प्रसार्य परत
*(शयने सुखेनात्युच्छ्रितेन) इत्यपिपाठः
5 पृष्ठं वर्तं 6 सावशेषं 7 तिहस्य 8 स्फिजौ
9 प्रसारिता 10 मुष्टिनाङ्गं 11 स्नेहेनाल्पं 12 स्नेहेनद्रव
13 त्वागत 14 त्रियो याम

॥ अनिवृत्तौ क्वचिदुपेक्षाविधिः ॥

[1]अतिरौक्ष्यादनागच्छन् न चेज्जाडयादिरोगकृत् ।
उपेक्षेतैव हि ; ततोऽध्युषितश्च निशां पिबेत् ॥ ३२
प्रातर्नागरधान्याम्भः कोष्णं केवलमेव वा ।

॥ पुनरनुवासनम् ॥

[2]अन्वासयेत् तृतीयेऽह्नि पञ्चमे वा [3]पुनश्च तम् ॥ ३३
यथा वा [4]स्नेहपक्तिः स्यादतोऽत्युल्बणमारुतान् ।
व्यायामनित्यदीप्ताग्नि[5]रूक्षांश्च प्रति[6]वासरम् ॥ ३४

॥ स्निग्धास्निग्धयोर्निरूहविधिः ॥

इति स्नेहैस्त्रिचतुरैः [7]स्निग्धे स्रोतोविशुद्धये ।
निरूहं शोधनं युञ्ज्यादस्निग्धे स्नेहनं तनोः ॥ ३५

॥ निरूहविधिः ॥

पञ्चमेऽथ तृतीये वा दिवसे साधके शुभे ।
मध्याह्ने किञ्चिदावृत्ते [8]प्रयुक्ते बलिमङ्गले ॥ ३६
[9]अभ्यक्तस्वेदितोत्सृष्टमलं नाति बुभुक्षितम् ।
अवेक्ष्य पुरुषं दोषं भेषजादीनि चादरात् ॥ ३७
वस्तिं प्रकल्पयेद् वैद्यस्तद्विधैर्बहुभिः सह ।

॥ निरूहकल्पनम् ॥

क्वाथयेद् विंशति[10]पलं द्रव्यस्याष्टौ फलानि च ॥ ३८
ततः क्वाथचतुर्थांशं स्नेहं वाते [11]प्रकल्पयेत् ।
पित्ते स्वस्थे च षष्ठांशमष्टमांशं कफेऽधिके ॥ ३९
सर्वत्र चाष्टमं भागं कल्काद् भवति वा यथा ।
नात्यच्छ[12]सान्द्रता वस्तेः पलमात्रं गुडस्य च ॥ ४०

---

1 कार्श्यौ दुनार्चन 2 अन्वासये 3 पुनश्चकम् 4 स्नेहसक्ति
5 रूक्षाश्च 6 मासरम् 7 स्निग्धे 8 सायाह्न कुर्वीत
9 अन्वक्त 10 फलद्रव्ये चाष्टौ 11 प्रकल्पयेत्
12 सान्द्रौ तौ वस्तः फलमात्रं गुडस्य

मधुपट्टादि [1]शेषं च युक्त्या

॥ निरूहसंस्कारक्रमः ॥

सर्वं तदेकतः ।

उष्णाम्बुकुम्भीबाष्पेण तप्तं [2]खजसमाहतम् ॥ ४१

[3]प्रक्षिप्य वस्तौ प्रणयेत् पायौ

॥ निरूहस्वरूपम् ॥

नात्युष्णशीतलम् ।

नातिस्निग्धं न वा तीक्ष्णं नातिरूक्षं न वा मृदु ॥ ४२

नात्यच्छसान्द्रं नोनातिमात्रं नापटु नाति च ।

लवणं तद्वदम्लं च

॥ मतान्तरेण द्रव्यप्रमाणम् ॥

वदन्त्यन्ये विपश्चितः ॥ ४३

[4]मात्रां त्रिपलिकां कुर्यात् स्नेहमाक्षिकयोः पृथक् ।

[5]कर्षार्धं माणिमन्थस्य स्वस्थे कल्क[6]पलद्वयम् ॥ ४४

सर्वद्रवाणां शेषाणां पलानि दश कल्पयेत् ।

॥ निरूहसंयोजनविधिः ॥

माक्षिकं लवणं स्नेहं कल्कं क्वाथमिति क्रमात् ॥ ४५

आवपेत निरूहाणा[7]मेष संयोजने विधिः ।

॥ दत्तमात्रे रोगिणा कर्तव्यम् ॥

उत्तानो दत्तमात्रे तु निरूहे तन्मना भवेत् ॥ ४६

[8]कृतोपधानः संजातवेगश्चो[9]त्कटकः सृजेत् ।

॥ निरूहप्रत्यागमनकालः ॥

[10]आगतौ परमः कालो मुहूर्तो मृत्यवे परम् ॥ ४७

---

1 लेषं   2 श्रुथि   3 प्रक्षेप्य
4 मात्रा   5 कर्षार्धे माणिमाथस्य   6 फल
7 मोष   8 कृतोपधान   9 स्फुटिकः
10 आगतो

॥ प्रत्यानयनविधिः ॥

तत्रानुलोमिनं स्नेहक्षारमूत्राम्लकल्पितम् ।
त्वरितं स्निग्धतीक्ष्णोष्णं वस्तिमन्यं प्रपीडयेत् ॥ ४८
[1]विदध्यात् फलवर्तिं वा स्वेदनोत्त्रासनानि च ।

॥ अयोगे पुनर्निरूहणविधिः ॥

स्वयमेव निवृत्ते तु द्वितीयो वस्तिरिष्यते ॥ ४९
तृतीयोऽपि चतुर्थोऽपि यावद् वा सुनिरूढता ।

॥ योगादिलक्षणं, योगे कर्तव्यं च ॥

विरिक्तवच्च योगादीन् विद्याद् ; योगे तु भोजयेत् ॥ ५०
कोष्णेन वारिणा [2]स्नातं धन्वमांसरसौदनम् ।

॥ स्नानभोजनप्रयोजनम् ॥

विकारा ये निरूढस्य भवन्ति [3]प्रचलैर्मलैः ॥ ५१
ते सुखोष्णाम्बुसिक्तस्य यान्ति भुक्तवतः शमम् ।

॥ वातार्दिते सद्योऽनुवासनविधिः ॥

अथ वा[4]तार्दितं भूयः सद्य एवानुवासयेत् ॥ ५२

॥ अनुवासनस्य योगादिलक्षणम् ॥

[5]सम्यग्धीनातियोगाश्च तस्य स्युः स्नेह[6]पीतवत् ।

॥ अनुवासनसिद्धिलक्षणम् ॥

किञ्चित्कालं स्थितो [7]यश्च सपुरीषो निवर्तते ॥ ५३
[8]सानुलोमानिलः स्नेहस्तत् सिद्धमनुवासनम् ।

॥ दोषभेदेनानुवासनसंख्याः ॥

[9]एकं त्रीन् वा बलासे तु स्नेहवस्तीन् प्रकल्पयेत् ॥ ५४
पञ्च वा सप्त वा पित्ते नवैकादश वाऽनिले ।

---

1 विदध्यात्फल 2 स्नातं 3 प्रचलैर्मलैः
4 वातर्दितं 5. सम्यग्विकल्पादियोगाश्च 6. पीड
7. यश्च 8. सानुलोमानलस्निग्ध 9. एकन्त्रीन्वा

पुनस्ततोऽप्ययुग्मांस्तु

॥ पुनरास्थापनं भोजनं च ॥

पुनरास्थापनं ततः ॥ ५५

कफपित्तानिलेष्वन्नं यूषक्षीररसैः क्रमात् ।

॥ वाते वस्तिविधिः ॥

वातघ्नौषध[1]निष्क्वाथत्रिवृतासैन्धवैर्युतः ॥ ५६

वस्तिरेकोऽनिले स्निग्धः स्वाद्वम्लोष्णो रसान्वितः ।

॥ पित्ते वस्तिविधिः ॥

न्यग्रोधादिगणक्वाथपद्मकादिसितायुतौ ॥ ५७

पित्ते स्वादु[2]हिमौ साज्यक्षीरेक्षुरसमाक्षिकौ ।

॥ कफे वस्तिविधिः ॥

आरग्वधादिनिष्क्वाथवत्सकादियुतास्त्रयः ॥ ५८

रूक्षाः सक्षौद्रगोमूत्रास्तीक्ष्णोष्णकटुकाः कफे ।

॥ सन्निपाते वस्तिविधिः ॥

त्रयस्ते सन्निपातेऽपि दोषान् घ्नन्ति यतः क्रमात् ॥ ५९

॥ मतभेदेन संख्याव्यवस्था ॥

त्रिभ्यः परं वस्तिमतो नेच्छन्त्यन्ये चिकित्सकाः ।

[3]न हि दोषश्चतुर्थोऽस्ति पुनर्दीयेत यं प्रति ॥ ६०

॥ मतान्तरेण वस्तित्रयविधिः ॥

उत्क्लेशनं शुद्धिकरं दोषाणां शमनं क्रमात् ।

त्रिधैव कल्पयेद् वस्तिमित्यन्येऽपि प्रचक्षते ॥ ६१

॥ मतानां प्रमाणने युक्तिः ॥

दोषौषधादिबलतः सर्वमेतत् प्रमाणयेत् ।

सम्यङ्निरूढलिङ्गं तु [4]नासम्भाव्य निवर्तयेत् ॥ ६२

---

1. निष्क्वाथत्रिवृत 2. हिमौ 3. आरग्वधादि

4. नासंभाव्यनिवृत्तये

॥ कर्मवस्तिविधिः ॥

[1]प्राक् स्नेह एकः पञ्चान्ते द्वादशास्थापनानि च ।
सान्वासनानि कर्मैवं वस्तयस्त्रिंशदीरिताः ॥ ६३

॥ कालवस्तिविधिः ॥

कालः पञ्चदशैकोऽत्र प्राक् [2]स्नेहोऽन्ते त्रयस्तथा ।
षट् पञ्चवस्त्यन्तरिताः

॥ योगवस्तिविधिः ॥

योगोऽष्टौ वस्तयोऽत्र तु ॥ ६४
त्रयो निरूहाः [3]स्नेहाश्च स्नेहावाद्यन्तयोरुभौ ।

॥ वस्तिद्वयस्य परस्परान्तरितत्वविधिः ॥

स्नेहवस्तिं निरूहं वा नैकमेवातिशीलयेत् ॥ ६५
उत्क्लेशाग्निवधौ स्नेहान्निरूहा[4]न्मारुताद् भयम् ।
तस्मान्निरूढः [5]स्नेह्यः स्यान्निरूह्यश्चानु[6]वासितः ॥ ६६
स्नेहशोधनयुक्त्यैवं वस्तिकर्म त्रिदोषजित् ।

॥ मात्रावस्तिलक्षणम् ॥

ह्रस्वया स्नेहपानस्य मात्रया योजितः समः ॥ ६७
मात्रावस्तिः स्मृतः स्नेहः

॥ मात्रावस्त्यर्हाः ॥

शीलनीयः सदा च सः ।
बालवृद्धाध्वभार[7]स्त्रीव्यायामासक्तचिन्तकैः ॥ ६८
वातभग्नाबलाल्पाग्निनृपेश्वरसुखात्मभिः ।

॥ मात्रावस्तिगुणाः ॥

दोषघ्नो निष्परीहारो बल्यः सृष्टमलः [8]सुखः ६९

---

1 स्नेह एकः पश्चांते द्वा 2 स्नेहान्ते 3 च स्नेहौ 4 न्निरूहा
5 स्नेह 6 वासकः 7 भस्त्री 8 सुखी

॥ उत्तरवस्त्यर्हाः ॥

वस्तौ रोगेषु नारीणां योनिगर्भाशयेषु च ।

द्वित्रास्थापनशुद्धेभ्यो [1]विदध्याद् वस्ति[2]मुत्तरम् ॥ ७०

॥ उत्तरवस्तिनेत्रलक्षणम् ॥

आतुराङ्गुलमानेन तन्नेत्रं द्वादशाङ्गुलम् ।

वृत्तं गोपुच्छवन्मूलमध्ययोः कृतकर्णिकम् ॥ ७१

सिद्धार्थकप्रवेशाग्रं श्लक्ष्णं हेमादिसंभवम् ।

कुन्दाश्वमारसुमनःपुष्पवृन्तोपमं दृढम् ॥ ७२

॥ तद्वस्तिस्वरूपमौषधमात्रा च ॥

तस्य वस्तिर्मृदुलघुर्मात्रा [3]शुक्तिर्विकल्प्य वा ।

॥ उत्तरवस्तिप्रणयनम् ॥

अथ [4]स्नाताशितस्यास्य स्नेहवस्तिविधानतः ॥ ७३

ऋजोः सुखोपविष्टस्य [5]पीठे जानु[6]समे मृदौ ।

हृष्टे मेढ्रे स्थिते [7]चर्जौ शनैः स्रोतोविशुद्धये ॥ ७४

सूक्ष्मां शलाकां प्रणयेत् तया [8]शुद्धेऽनु सेवनीम् ।

[9]आमेहनान्तं नेत्रं च निष्कम्पं [10]गुदवत् ततः ॥ ७५

[11]पीडितेऽन्तर्गते स्नेहे स्नेहवस्तिक्रमो हितः ।

॥ उत्तरवस्तिसंख्या ॥

[12]वस्तीननेन विधिना दद्यात् त्रींश्चतुरो[13]ऽपि वा ॥ ७६

॥ अनुवासनोपचारातिदेशः ॥

अनुवासनवच्छेषं सर्वमेवास्य चिन्तयेत् ।

॥ स्त्रीणामुत्तरवस्तिकालः ॥

स्त्रीणामार्तवकाले तु [14]योनिर्गृह्णात्यपा[15]वृतेः ॥ ७७

---

1 विदध्या  2 मुत्तमम्  3 शुक्ते वि  4 स्नाता शित
5 पीठेजानु  6 समो मृदू  7 चर्जौ  8 शुद्धेन सेवनम्
9 आमेहनान्तं  10 गुदवत्ततः  11 पीडिते ते शनैस्स्नेहो  12 वस्तिना येन
13 ह्रि वा  14 योनिगृ  15 वृत

विदधीत तदा तस्मा[1]दनृतावपि वात्यये ।
योनिविभ्रंशशूलेषु योनिव्याप[2]घसृग्दरे ॥ ७८

॥ नेत्रप्रमाणं प्रवेशनविशेषश्च ॥

नेत्रं दशाङ्गुलं मुद्गप्रवेशं चतुरङ्गुलम् ।
अपत्यमार्गे योज्यं स्याद् द्व्यङ्गुलं मूत्रवर्त्मनि ॥ ७९

॥ बालानां नेत्रप्रवेशनविधिः ॥

मूत्रकृच्छ्रविकारेषु [3]बालानामेकमङ्गुलम् ।

॥ स्त्रीबालयोरुत्तरवस्तिमात्रा ॥

[4]प्रकुञ्चो मध्यमा मात्रा; बालानां शुक्तिरेव वा ॥ ८०

॥ स्त्रीणामुत्तरवस्तिप्रणयनम् ॥

[5]उत्तानायाः शयानायाः सम्यक् संकोच्य सक्थिनी ।
ऊर्ध्वजान्वाः

॥ स्त्रीणामुत्तरवस्त्यावृत्तिः ॥

त्रिचतुरानहोरात्रेण योजयेत् ॥ ८१
[6]वस्तींस्त्रिरात्रमेवं च स्नेहमात्रां विवर्धयेत् ।
त्र्यहमेव च विश्रम्य [7]प्रणिदध्यात् पुनस्त्र्यहम् ॥ ८२

॥ कर्मणामन्तरालकालः ॥

पक्षाद् विरेको वमिते ततः पक्षान्निरूहणम् ।
सद्यो निरूढश्चान्वास्यः सप्तरात्राद् विरेचितः ॥ ८३

वस्तेर्मलहरत्वे युक्तिः ॥

यथा कुसुम्भादियुतात् तोयाद् रागं हरेत् पटः ।
तथा [8]द्रवीकृताद् देहाद् वस्तिर्निर्हरते मलान् ॥ ८४

---

1 दस्मा 2 प स्त्रग्धरे 3 पाकाना 4 प्रकुञ्च
5 उत्थानाया 6 वस्तित्रि 7 प्रणिदध्या 8 स विकृता

॥ वस्तिप्रशंसा ॥

॥ सर्वरोगाणां वातजत्वम् ॥

शाखागताः [1]कोष्ठगताश्च रोगा
[2]मर्मोर्ध्वसर्वावय[3]वाङ्गजाश्च ।
ये सन्ति तेषां न तु कश्चिदन्यो
[4]वायोः परं जन्मनि हेतुरस्ति ॥ ८५

विट्श्लेष्मपित्तादिमलाशयानां
विक्षेपसंहारकरः स यस्मात् ।

॥ वातहरणे वस्तेर्मुख्यत्वम् ॥

[5]तस्यातिवृद्धस्य [6]शमाय नान्यद्
वस्तेर्विना भेषजमस्ति किञ्चित् ॥ ८६

॥ वस्तेस्तन्त्राग्रिमत्वम् ॥

तस्माच्चिकित्सा[7]र्ध इति प्रदिष्टः
कृत्स्ना चिकित्सापि च वस्तिरेकैः ।

॥ सिराव्यधस्यापि मुख्यतन्त्रत्वम् ॥

तथा निजागन्तुविकार[8]कारि-
[9]रक्तौषधत्वेन सिराव्यधोऽपि ॥ ८७

इति श्रीश्रीनिवासपण्डितविरचिते चिकित्सातिलके
सूत्रस्थाने वस्तिविधिर्नाम षड्विंशोऽध्यायः ॥

---

1 गोष्ठ  2 मर्वोर्ध्व  3 वा गजाश्च
4 वायो  5 तस्यादि  6 समाय
7 र्धं मति प्रदिष्ट  8 कारी  9 द्रीवौषधत्वेन सिरा

## ॥ अथ सप्तविंशोऽध्यायः ॥

**अथातो वस्तिकल्पं व्याख्यास्यामः ॥**

॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥

**॥ वातहरनिरूहाः ॥**

**॥ बलादिनिरूहः ॥**

बलां गुडूचीं त्रिफलां [1]सरास्नां
[2]द्वे पञ्चमूले च पलोन्मितानि ।
अष्टौ फलान्यर्धतुलां च मांसा-
च्छागात् पचेदप्सु [3]चतुर्थशेषम् ॥ १
[4]पूतो यवानीफलबिल्वकुष्ठ-
वचाशताह्वा[5]घनपिप्पलीनाम् ।
कल्कैर्गुडक्षौद्रघृतैः सतैलै-
र्युक्तः सुखोष्णो लवणान्वितश्च ॥ २
[6]वस्तिः परं सर्व[7]गदे प्रशस्तः
स्वस्थे [8]हितो जीवन [9]बृंहणश्च ।

**॥ कल्कानुक्तौ अस्यातिदेशः ॥**

वस्तौ च यस्मिन् पठितो न कल्कः
सर्वत्र दद्यादमुमेव तत्र ॥ ३

**॥ दशमूलादिनिरूहः ॥**

द्विपञ्चमूलस्य रसोऽम्लयुक्तः
सच्छागमांसस्य स पूर्वपेष्यः ।
त्रिस्नेहयुक्तः [10]प्रवरो निरूहः
सर्वानिलव्याधिहरः प्रदिष्टः ॥ ४

---

1 सकाल्नां 2 द्विपञ्चमूलानि फलो 3 चतुर्दशेषु 4 पूर्वे यवानीं
5 घुन 6 वस्तेः 7 गरे 8 हितं
9 बृंहणश्च 10 प्रवणो

## ॥ एरण्डादिनिरूहः ॥

एरण्डमूलात् [1]त्रिपलं पलाशात्
तथा [2]पलांशं लघु पञ्चमूलम् ।
रास्नाबलाच्छिन्नरुहाश्वगन्धा-
पुनर्नवारग्वधदेवदारु ॥ ५
[3]फलानि चाष्टौ [4]सलिलाढकाभ्यां
विपाचयेदष्टमशेषितेऽस्मिन् ।
वचां[5] शताह्वाह्वपुषाप्रियङ्गु-
यष्टीकणावत्सकबीजमुस्तम् ॥ ६
दद्यात् सुपिष्टं सहताक्ष्यशैल-
मक्षप्रमाणं लवणांशयुक्तम् ।
समाक्षिकस्तैलयुतः समूत्रो
बस्तिर्जयेत्लेखनदीपनोऽसौ ॥ ७
जङ्घोरुपादत्रिकपृष्ठकोष्ठ-
हृद्गुह्यशूलं [6]गुरुतां विबन्धम् ।
[7]गुल्माश्मवर्ध्मग्रहणीगुदोत्थां-
स्तांस्तांश्च रोगान् कफवातजातान् ॥ ८

## ॥ पित्तहरनिरूहः ॥

## ॥ यष्ट्यादिनिरूहः ॥

यष्ट्याह्वलोध्राभयचन्दनैश्च
[8]शृतं पयोऽग्र्यं कमलोत्पलैश्च ।
सशर्करं क्षौद्रयुतं सुशीतं
पित्तामयान् हन्ति सजीवनीयम् ॥ ९

---

1 त्रिफला 2 फलांशं 3 फलानि 4 सविषाक्तमथं
5 शताह्वाह्वपुषा 6 गुरुता 7 गुल्मार्शोपथ 8 शृतं

॥ प्रत्यागते क्रमः फलश्रुतिश्च ॥

प्रत्यागते धन्व[1]रसेन शालिं
क्षीरेण चाद्यात् परिषिक्तगात्रः ।
दाहातिसारप्रदरास्रपित्त-
हृत्पाण्डुरोगान् विषमज्वरं च ।
सगुल्ममूत्रग्रहकामिलादीन्
सर्वामयान् पित्तकृतान् निहन्ति ॥ १०

॥ कफघ्ननिरूहः ॥

॥ कोशातकादिः ॥

कोशातकारग्वधदेवदारु-
दूर्वाश्वदंष्ट्रा[2]कुटजार्कपाठाः ॥ ११
पक्त्वा कुलत्थान् बृहतीं च तोये
रसस्य तस्य प्रसृता दश स्युः ।
तान् सर्षपैलामदनैः सकुष्ठै-
रक्षप्रमाणैः प्रसृतैश्च युक्तान् ॥ १२
क्षौद्रस्य *तैलस्य फलाह्वयस्य
क्षारस्य तैलस्य च [3]सार्षपस्य ।
दद्यान्निरूहं कफरोगिताय
मन्दाग्नये [4]चाशनविद्विषे च ॥ १३

॥ प्रासृतिकबस्तिप्रकरणम् ॥

[5]वक्ष्ये [6]मृदून् स्नेहकृतो निरूहान्
सुखोचितेभ्यः प्रसृतैः पृथक् तु ॥ १४
अथेमान् सुकुमाराणां निरूहान् स्नेहनान् मृदून् ।
कर्मणा [7]विप्लुतानां च वक्ष्यामि प्रसृतैः पृथक् ॥ १५

---

1 रसे स 2 कुलपाठ

* "फलाह्वयस्य तैलस्य = मदनफलकल्केनास्नेहैश्च पक्वस्य तैलस्य" इत्यरुणदत्तः ।

3 सर्षपस्य 4 चासन 5 वक्ष्ये 6 मृदुस्नेहकृता 7 विप्लुकानां

॥ क्षीरमाधुतैलिकः ॥

[1]क्षीराद् द्वौ प्रसृतौ कार्यौ मधुतैल[2]घृतात् त्रयः ।
खजेन मथितो वस्तिर्वातघ्नो बल[3]वर्णकृत् ॥ १६

॥ पञ्चतिक्तवस्तिः ॥

पटोलनिम्बपूतीकरास्नासप्तच्छदाम्भसः ।
प्रसृतः पृथगाज्याच्च वस्तिः सर्षपकल्कवान् ॥ १७
स पञ्चतिक्तोऽभिष्यन्दक्रिमिकुष्ठप्रमेह[4]नुत् ।

॥ तैलगोमूत्रादिवस्तिः ॥

चत्वारस्तैलगोमूत्रदधिमण्डाम्ल[5]काञ्जिकात् ॥ १८
प्रसृताः सर्षपैः पिष्टैर्विट्[6]सङ्गानाहभेदनः ।

॥ पयस्यादिवस्तिः ॥

पयस्येक्षुस्थिरारास्नाविदारीक्षौद्रसर्पिषाम् ॥ १९
एकैक[7]प्रसृतो वस्तिः कृष्णाकल्को [8]वृषत्वकृत् ।

॥ प्रायोगिकवस्तिप्रकरणम् ॥

सिद्धवस्तीनतो वक्ष्ये सर्वदा तान् प्रयोजयेत् ॥ २०
निर्व्यापदो बहुफलान् बलपुष्टिकरान् सुखान् ।

॥ माधुतैलिकः ॥

[9]मधुतैले समे कर्षः सैन्धवाद् द्विपिचु[10]र्मिशिः ॥ २१
एरण्डमूलक्काथेन निरूहो माधुतैलिकः ।
रसायनं प्रमेहार्शःक्रिमिगुल्मान्त्रवृद्धिनुत् ॥ २२

॥ माधुतैलिककल्पान्तरम् ॥

सयष्टिमधुक[11]श्चैव चक्षुष्यो रक्तपित्तजित् ।

---

1 क्षीराद्वा कार्यो  2 घृतौ  3 वर्ष  4 नम्
5 काञ्जितान्  6 सङ्गाहाऽमेदनैः  7 प्र सृतो वह्निः  8 वृषद
9 मृदु  10 मिशी  11 श्चोषः

॥ यापनवस्तिः ॥

[1]यापनो घनकल्केन मधु[2]तैलरसाज्यवान् ॥ २३
पायुजानूरुवृषणवस्तिमेहनशूलजित् ।

॥ युक्तरथवस्तिः ॥

[3]एरण्डमूलनिष्काथो मधु तैलं ससैन्धवम् ॥ २४
[4]एष युक्तरथो वस्तिः सवचापिप्पलीफलः ।

॥ सिद्धवस्तिः ॥

पञ्चमूलस्य [5]निष्काथस्तैलं मागधिका मधु ॥ २५
ससैन्धवः समधुकः सिद्धवस्तिरिति स्मृतः ।

॥ यापनराजवस्तिः ॥

मुस्तापाठामृतैरण्डबलारास्नापुनर्नवम् ॥ २६
मञ्जिष्ठारग्वधोशीरत्रायमाणाक्षरोहिणीः ।
कनीयः पञ्चमूलं च पालिकं मदनाष्टकम् ॥ २७
जलाढके पचेत् तच्च [6]पादशेषं परि[7]स्रुतम् ।
क्षीरद्विप्रस्थसंयुक्तं क्षीरशेषं पुनः पचेत् ॥ २८
सपादजाङ्गलरसः ससर्पिर्मधुसैन्धवः ।
पिष्टैर्यष्टि[8]मिशिश्यामाकलिङ्गक[9]रसाञ्जनैः ॥ २९
वस्तिः सुखोष्णो मांसाग्निबलशुक्रप्रवर्धनः ।
वातासृङ्मेहमोहर्शोगुल्मविण्मूत्रसंग्रहम् ॥ ३०
विषमज्वरवीसर्प[10]वर्ध्माध्मानप्रवाहिकाः ।
वङ्क्षणोरुकटीकुक्षिमन्याश्रोत्रशिरोरुजः ॥ ३१
[11]हन्यादसृग्दरोन्मादशोषकासाश्मकुण्डलान् ।
चक्षुष्यः पुत्रदो राजा यापनानां रसायनम् ॥ ३२

---

1 यावनो 2 रसे 3 एरण्ड 4 विषयुक्तरसो
5 निष्काथ 6 पादलेपं 7 सृतम् 8 मिति
9 रसां 10 वर्धा 11 हन्ति दं

॥ अनुवासनकल्पः ॥

स्नेहांश्चा[1]यन्त्रणान् सिद्धान् सिद्धद्रव्यैः प्रकल्पयेत् ।

॥ सपरिहारस्नेहबस्तिप्रतिज्ञा ॥

दोषघ्नाः सपरीहरा वक्ष्यन्ते स्नेहबस्तयः ॥ ३३

॥ दशमूलाद्यनुवासनतैलम् ॥

दशमूलं [2]बलां रास्नामश्वगन्धां पुनर्नवाम् ।
गुडूच्येरण्ड[3]पूतीक भार्ङ्गीवृषकरोहिषम् ॥ ३४
शतावरीं सहचरं [4]काकनासां [5]पलाशकम् ।
यव[6]माषातसीकोलकुलत्थान् प्रसृतोन्मितान् ॥ ३५
वहे [7]विपाच्य तोयस्य पादशेषेण तेन च ।
पचेत् [8]तैलाढकं पेष्यैर्जीवनीयैः [9]पलोन्मितैः ॥ ३६
अनुवासनमित्येतत् सर्ववातविकारनुत् ।

॥ बिल्वाद्यनुवासनतैलम् ॥

साधितं पञ्चमूलेन तैलं बिल्वादिनाथवा ॥ ३७
कफघ्नं कल्पयेत्

॥ कफघ्नस्नेहकल्पनविधिः ॥

तैलं द्रव्यैर्वा कफ[10]हारिभिः ।
फलैरष्टगुणैरम्लैः सिद्धमन्वासनं कफे ॥ ३८

॥ आवस्थिककल्पः ॥

मृदु[11]बस्तिजडीभूते तीक्ष्णोऽन्यो बस्तिरिष्यते ।
[12]तीक्ष्णैर्विकशिते स्निग्धो मधुरः शिशिरो मृदुः ॥ ३९

॥ तैक्ष्ण्यमार्दवकल्पनविधिः ॥

तीक्ष्णत्वं मूत्रबिल्वाग्निलवणक्षारसर्षपैः ।
प्राप्तकालं विधातव्यं [13]क्षीराज्याद्यैस्तु मार्दवम् ॥ ४०

---

1 यन्त्रणां 2 बला .... श्वगन्धा 3 भार्ङ्गीरपूतीक 4 कासां
5 त्रिकाम् 6 पाषाणकी 7 विपाश्च 8 तैलाढ्यं
9 फलोन्मितैः 10 हारिभिः 11 बस्तिजडीभूते
12 तीक्ष्णो विकसिते 13 क्षीराज्याद्यैस्तु मर्दवम्

॥ बलाद्यपेक्षया वस्तिप्रयोगविधिः ॥

बलकालरोगदोषप्रकृतीः प्रविभज्य योजितो वस्तिः ।
स्वैः स्वैरौषधवर्गैः स्वान् स्वान् रोगान् निवर्तयति ॥ ४१

॥ हेतुप्रत्यनीकवस्तिविधिः ॥

[1]उष्णार्तानां शीताञ्छीतार्तानां तथा सुखोष्णांश्च ।
तद्योग्यौषधयुक्तान् वस्तीन् संतर्क्य युञ्जीत ॥ ४२

॥ बृंहणवस्त्यनर्हाः ॥

वस्तिं [2]न बृंहणीयं दद्याद् रोगेषु शोधनीयेषु ।
मेदस्विनो विशोध्या ये च नराः कुष्ठमेहार्ताः ॥ ४३

॥ शोधनवस्त्यनर्हाः ॥

न क्षीणक्षतदुर्बलमूर्छितकृशशुष्क[3]शुद्धदेहानाम् ।
दद्याद् विशोधनीयान् [4]दोषनिबद्धायुषो ह्येते ॥ ४४

इति श्रीश्रीनिवासपण्डितविरचिते चिकित्सातिलके
सूत्रस्थाने वस्तिकल्पो नाम सप्तविंशोऽध्यायः ॥

---

1 उष्णार्तानां जि ... मूष्णांश्च तद्योग्यौषधं युञ्जीत 2 दद्याद् बृंहणीयां
3 शुक 4 न्दोषविबन्धायुषो

## ॥ अथाष्टाविंशोऽध्यायः ॥

॥ अथातो बस्तिव्यापत्सिद्धिमध्यायं व्याख्यास्यामः ॥

॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥

॥ अयोगव्यापन्निमित्तानि ॥

अस्निग्धस्विन्नदेहस्य गुरुकोष्ठस्य योजितः ।
शीतोऽल्पस्नेहलवणद्रव्यमात्रो घनोऽपि वा ॥ १
बस्तिः संक्षोभ्य तं दोषं दुर्बलत्वादनिर्हरन् ।
करोत्ययोगं

॥ अयोगजा उपद्रवाः ॥

तेन [1]स्याद् वातमूत्रशकृद्ग्रहः ॥ २
नाभिबस्तिरुजानाहौ हृल्लेपः श्वयथुर्गुदे ।
कण्डूर्गण्डानि[2]वैवर्ण्यमरतिर्वह्निमार्दवम् ॥ ३

॥ अयोगव्यापच्चिकित्सा ॥

क्वाथ[3]द्वयं * प्राग्विहितं मध्य[4]दोषेऽतिसारिणि ॥
उष्णस्य तस्मादेकस्य [5]तत्र पानं प्रशस्यते ॥ ४
फलवर्त्यस्तथा स्वेदाः कालं ज्ञात्वा विरेचनम् ।

॥ बिल्वादिनिरूहः ॥

बिल्वमूत्र[6]त्रिवृद्दार्व्यवकोलकुलत्थवान् ॥ ५

---

1 स्या वात     2 महति     3 द्वयं

* अत्र "प्राग्विहितं क्वाथद्वय" मित्यनेन अष्टाङ्गहृदयचिकित्सास्थाने अतिसारचिकित्सितोक्तौ "भूतीकपिप्पलीशुण्ठीवचाधान्यहरीतकी: । अथवा बिल्वधनिकामुस्तनागरवालकम्" ॥ इति योगौ परामृश्येते । चिकित्सातिलकेऽस्मिन् सूत्रस्थान एव बस्तिव्यापत्सिद्धेर्वर्ण्यमानत्वात् परस्ताद्वक्ष्यमाणचिकित्सास्थानवक्तव्यस्य "प्राग्विहित" मिति निर्देशः कथमुपपद्यत इति तु चिन्त्यमेव । अष्टाङ्गहृदये तु चिकित्सास्थानमनुकल्पस्थाने तथा निर्देशस्य नानुपपत्तिः ॥

4 दोषे तु सारिणि     5 वृद्धः     6 त्रिवृद्वचि

सुरादिमूत्रवान् वस्तिः[1] ★सप्राक्पेप्यस्तमानयेत् ।

॥ आध्मानाद्युपद्रवाः ॥

युक्तोऽल्पवीर्यो दोषाढ्ये रूक्षे क्रूराशये तथा ॥ ६

वस्तिर्दोषावृतो रुद्धमार्गो [2]रुन्ध्यात् समीरणम् ।

स विमार्गोऽनिलः कुर्यादाध्मानं मर्मपीडनम् ॥ ७

विदाहं गुदकोष्ठस्य मुष्कवंक्षणवेदनाम् ।

रुणद्धि हृदयं शूलैरितश्चेतश्च धावति ॥ ८

॥ आध्मानादिव्यापच्चिकित्सा ॥

स्वभ्यक्तस्विन्नगात्रस्य [3]तत्र वर्तिं प्रयोजयेत् ।

विल्वादिश्च निरूहे स्यात् पीलुसर्षपमूत्रवान् ॥ ९

[4]सरलामरदारुभ्यां साधितं चानुवासनम् ।

॥ ऊर्ध्वमारुतव्यापत् ॥

[5]कुर्वतो वेगसंरोधं पीडितो वातिमात्रया ॥ १०

अस्निग्धलवणोष्णो वा वस्तिरल्पोऽल्पभेपजः ।

मृदुर्वा मारुतेनोर्ध्वं विक्षिप्तो मुख[6]नासिकात् ॥ ११

निरेति मूर्छाहृल्लासतृड्दाहादीन् प्रवर्तयेत् ।

॥ ऊर्ध्वमारुतव्यापच्चिकित्सा ॥

मूर्छाविकारं दृष्ट्वास्य सिञ्चेच्छीताम्बुना मुखम् ॥ १२

[7]व्यजेदाक्रमनाशाच्च प्राणायामं च कारयेत् ।

पृष्ठपार्श्वोदरं मृद्यात् करै[8]रुष्णैरधोमुखम् ॥ १३

केशेषूत्थाप्य धुन्वीत [9]भीषयेद् व्यालदंष्ट्रिभिः ।

शस्त्रोल्काराजपुरुषैर्वस्तिरेति तथा ह्यधः ॥ १४

★ सप्राक्पेप्यः = यवानीफलविल्वकुष्ठवचाशताह्वाघनपिप्पलीगुडक्षौद्रमूत्रतैलकण-मैर्वकादिनिरूहकल्कैः सहितः ।

1 पैप्यस्तु मानयेत्  2 रुध्या  3 तत्र ... जयेत्  4 सरलागमदारुभ्यो
5 कर्षतो  6 नासिकात्  7 विध्यजेदामनाशाश्च  8 रुष्णो कफो
9 भावये

[1]पाणिवस्त्रैर्गलपीडां कुर्यान्न म्रियते यथा ।

॥ गलापीडादिकर्मणामुपपत्तिः ॥

प्राणोदाननिरोधाद्धि सुप्रसिद्धतरायणः ॥ १५

अपानः पवनो वस्तिं तमाश्वेवापकर्षति ।

॥ कुष्ठक्रमुकप्रयोगः ॥

कुष्ठक्रमुककल्कं च पाययेदम्लसंयुतम् ॥ १६

[2]औष्ण्यात् तैक्ष्ण्यात् सरत्वाच्च वस्तिं सोऽस्यानुलोमयेत् ।

॥ त्रिवृदादिप्रयोगः ॥

गोमूत्रेण त्रिवृत्पथ्याकल्कं वातानुलोमनम् ॥ १७

॥ दशमूलनिरूहनिर्देशः ॥

पक्काशयस्थिते स्विन्ने निरूहो दाशमूलिकः ।

॥ गोमूत्रसिद्धवस्तिविधि ः॥

[3]यवकोलकुलत्थैश्च विधेयो मूत्रसाधितः ॥ १८

वस्तिर्गोमूत्रसिद्धैर्वा सामृतावंशपल्लवैः ।

पूतीकरञ्ज[4]त्वक्पत्रशटीदेवाह्वरो[5]हिषैः ॥ १९

सतैलगुडसिन्धूत्थो [6]विरेकौषधकल्कवान् ।

॥ उरःस्थे निरूहे वस्तिः ॥

बिल्वादिपञ्चमूलेन सिद्धो वस्तिरुरस्स्थिते ॥ २०

शिरःस्थे निरूहे उपक्रमः ॥

[7]शिरःस्थे नावनं धूमः प्रच्छाद्य सर्षपैः शिरः ।

॥ अतियोगात्कुक्षिरोगव्यापत् ॥

वस्तिरत्युष्णतीक्ष्णाम्लघनोऽति[8]स्वेदितस्य वा ॥ २१

अल्पे दोषे मृदौ कोष्ठे प्रयुक्तो वा पुनः पुनः ।

अतियोगत्वमापन्नो भवेत् कुक्षिरुजाकरः ॥ २२

---

1 प्राणं 2 उष्णोष्ण्योत्क्षेप्यात्परञ्च 3 पुत्र 4 त्वक्पत्र
5 चिषैः 6 विरेके मधुकल्प 7 सिरस्थेनावनं 8 कवितस्य

॥ कुक्षिरोगव्यापच्चिकित्सा ॥

विरेचनातियोगेन स [1]तुल्याकृतिसाधनः ।

॥ परिस्रवव्यापत् ॥

वस्तिः क्षाराम्लतीक्ष्णोष्णलवणः पैत्तिकस्य वा ॥ २३

गुदं [2]दहँल्लिखन् क्षिण्वन् करोत्यस्रपरिस्रवम् ।

स विदग्धं स्रवत्यस्रं वर्णैः पित्तं च भूरिभिः ॥ २४

[3]बहुशश्चाथ वेगेन मोहं गच्छति चासकृत् ।

॥ परिस्रवव्यापच्चिकित्सा ॥

रक्तपित्तातिसार[4]घ्नी क्रिया तत्र प्रशस्यते ॥ २५

॥ दाहादौ चिकित्सा ॥

दाहादिषु त्रिवृत्कल्कं [5]मृद्वीकावारिणा पिबेत् ।

तद्धि [6]पित्तशकृद्वातान् हृत्वा दाहादिकाञ्जयेत् ॥ २६

विशुद्धस्तु पिबेच्छीतां यवागूं शर्करायुताम् ।

॥ पुरीषक्षये चिकित्सा ॥

युञ्ज्याद् वातिविरिक्तस्य क्षीणविट्कस्य भोजनम् ॥ २७

[7]माषयूषेण कुल्माषान् पानं दध्यथवा सुराम्

सिद्धिर्वस्त्यापदा[8]मेवं

॥ स्नेहवस्तिव्यापच्चिकित्साप्रतिज्ञा ॥

स्नेहवस्तौ तु वक्ष्यते ॥ २८

॥ आवृतस्नेहव्यापत् ॥

शीतोऽल्पो [9]वाधिके वाते पित्तेऽत्युष्णः कफे मृदुः ।

अतिभुक्ते गुरुर्वर्चः संचयेऽल्पबलस्तथा ॥ २९

[10]दोषैस्तैरावृतः स्नेहो न [11]यात्यभिभवादपि ।

1 तुल्यो कृति 2 दहन्लिखन्क्षिण्वन् 3 बहुशः काथ 4 घ्नो
5 मृद्विका 6 पित्तं शकृद्वातां हृत्वा 7 माषय .... षान् 8 मेन
9 वाधिको 10 तदावृत: 11 पित्तहयस्यतिमयादिभिः

॥ वातावृतस्नेहलक्षणम् ॥

स्तम्भोरुसदनाध्मानज्वरशूलाङ्गमर्दनैः ॥ ३०
पार्श्वरुग्वेष्टनैर्विद्याद् वायुना स्नेहमावृतम् ।

॥ वातावृतस्नेहचिकित्सा ॥

स्निग्धाम्ललवणोष्णैस्तं * रास्ना[1]पीतद्रुतैलिकैः ॥ ३१
[2]सौवीरकसुराकोलकुलत्थयवसाधितैः ।
निरूहैर्निर्हरेत् सम्यक् समूत्रैः पाञ्चमूलिकैः ॥ ३२
ताभ्यामेव च *तैलाभ्यां सायं भुक्तेऽनुवासयेत् ।

॥ पित्तावृतस्नेहलक्षणम् ॥

तृड्दाहरागसंमोहवैवर्ण्यतमकज्वरैः ॥ ३३
विद्यात् पित्तावृतं

॥ पित्तावृतस्नेहचिकित्सा ॥

स्वादुतिक्तैस्तं वस्तिभिर्हरेत् ।

॥ कफावृतस्नेहलक्षणम् ॥

तन्द्रा[3]शीतज्वरालस्यप्रसेकारुचिगौरवैः ॥ ३४
समूर्च्छाग्लानिभिर्विद्याच्छ्लेष्मणा स्नेहमावृतम् ।

॥ कफावृतस्नेहचिकित्सा ॥

कषायतिक्तकटुकैः सुरामूत्रोपसाधितैः ॥ ३५
फलतैलयुतैः साम्लैर्वस्तिभिस्तं विनिर्हरेत् ।

॥ अत्यशनावृतस्नेहलक्षणम् ॥

छर्दिर्मूर्च्छारुचिग्लानिशूलनिद्राङ्गमर्दनैः ॥ ३६

---

1 पित्तावृ

*रास्नापीतद्रुतैलिकैरिति निरूहैरित्यस्य विशेषणम् । रास्नादेवदारुसिद्धतैलयुक्तैरित्यर्थः ।

* ताभ्यां तैलाभ्यां = रास्नादेवदारुतैलाभ्याम् ।

2 सद्विरेक 3 शीतं ज्वरालस्य

आमलिङ्गैः सदाहैस्तं विद्यादत्यशनावृतम् ।

॥ अत्यशनावृतस्नेहचिकित्सा ॥

कटूनां लवणानां च क्वाथैश्चूर्णैश्च पाचनम् ॥ ३७
मृदुर्विरेकः सर्वं च तत्रामविहितं हितम् ।

॥ विडावृतस्नेहलक्षणम् ॥

विण्मूत्रानिलसङ्गार्तिगुरुताध्मानहृद्ग्रहैः ॥ ३८
स्नेहं विडावृतं विद्यात

॥ विडावृतस्नेहचिकित्सा ॥

स्नेहस्वेदैः सवर्तिभिः ।
श्यामाबिल्वादिसिद्धैश्च निरूहैः सानु[1]वासनैः ॥ ३९
निर्हरेद् विधिना सम्यगुदावर्तहरेण च ।

॥ अभुक्तादौ प्रणीतस्य व्यापदः ॥

अभुक्ते [2]शूनपायौ वा पेयामात्राशितस्य वा ॥ ४०
गुदे प्रणिहितः स्नेहो वेगाद् धावत्यनावृतः ।
ऊर्ध्वकायं ततः [3]कण्ठादूर्ध्वेभ्यः खेभ्य एत्यपि ॥ ४१

॥ अभुक्तादिप्रणीतस्नेहव्यापच्चिकित्सा ॥

मूत्रश्यामात्रिवृत्सिद्धो यवकोलकुलत्थवान् ।
तत्सिद्धतैलो देयः स्यान्निरूहः सानुवासनः ॥ ४२

॥ कण्ठात् प्रवृत्तस्य निग्रहविधिः ॥

कण्ठादा[4]गच्छतः स्तम्भकण्ठग्रहविरेचनैः ।
छर्दिघ्नीभिः क्रियाभिश्च तस्य कुर्यान्निबर्हणम् ॥ ४३

॥ अपक्वस्नेहजा व्यापत् ॥

[5]नापक्वं प्रणयेत् स्नेहं [6]गुदं स ह्युपलिम्पति ।

---

1 वासनम् 2 मानपेयौ 3 कण्ठामूर्ध्वेभ्यः 4 गच्छतस्तं च
5 संपक्वं 6 गुदुसं

ततः कुर्यात् स [1]रुग्दाहकण्डू[2]शोफान्

॥ अपक्वस्नेहजव्यापच्चिकित्सा ॥

क्रियात्र च ॥ ४४

[3]तीक्ष्णो वस्तिस्तथा तैलमर्कपत्ररसे [4]शृतम् ।

॥ सवातप्रणयनजव्यापत् ॥

अनुच्छ्वास्य तु वद्धे वा दत्ते निश्शेष एव वा ॥ ४५
प्रविश्य क्षुभितो वायुः शूलतोदकरो भवेत् ।

॥ सवातप्रणयनजव्यापच्चिकित्सा ॥

तत्राभ्यङ्गो गुदे स्वेदो वातघ्नान्यशनानि च ॥ ४६

॥ द्रुतप्रणयनादिजव्यापत् ॥

द्रुतं प्रणीते निष्कृष्टे सहसोत्क्षिप्त एव वा ।
स्यात् कटीगुदजङ्घोरुवस्तिस्तम्भार्तिभेदनम् ॥ ४७

॥ द्रुतप्रणयनादिजव्यापच्चिकित्सा ॥

भोजनं तत्र वातघ्नं स्वेदाभ्यङ्गाः [5]सवस्तयः ।

॥ पीडनदोषजव्यापत् ॥

पीड्यमानेऽन्तरा [6] मुक्ते गुदे प्रतिहतोऽनिलः ॥ ४८
उरश्शिरोरुजं [7]सादमूर्वोः संजनयेद् वली ।

॥ पीडनदोषजव्यापच्चिकित्सा ॥

वस्तिः स्यात् तत्र बिल्वादिफलश्यामादिमूत्रवान् ॥ ४९

॥ अतिपीडितलक्षणम् ॥

अतिप्रपीडितः कोष्ठे तिष्ठत्यायाति वा गलम् ।

॥ अतिपीडितचिकित्सा ॥

तत्र वस्तिर्विरेकश्च गलपीडादिकर्म च ॥ ५०

---

1 स्फार 2 शोष 3 तीक्ष्णा वस्ति ततस्तैलं अ
4 भृतम् 5 स्ववस्तय: 6 मुक्ता 7 सादमूर्वोस्सजनय

॥ विशुद्धस्य विशिष्टोपचारः ॥

वमनाद्यैर्विशुद्धं च क्षामदेह[1]बलानिलम् ।
यथाण्डं तरुणं पूर्णं तैलपात्रं यथा तथा ॥ ५१
भिषक् प्रयत्नतो रक्षेत् सर्वस्मादपचारतः ।

॥ प्रकृतिप्रापणक्रमः ॥

दद्यान्मधुरहृद्यानि ततोऽम्ललवणौ रसौ ॥ ५२
स्वादुतिक्तौ [2]ततो भूयः कषायकटुकौ रसौ ।
अन्योन्यप्रत्यनीकानां रसानां स्निग्धरूक्षयोः ॥ ५३
[3]व्यत्यासादुपयोगेन क्रमात् तं प्रकृतिं नयेत् ।

॥ प्रकृतिप्राप्तस्य लक्षणम् ॥

सर्वसहः स्थिरबलो विज्ञेयः प्रकृतिं गतः ॥ ५४

॥ इति श्रीश्रीनिवासपण्डितविरचितचिकित्सातिलके सूत्रस्थाने वमिव्यापत्सिद्धिर्नामाष्टाविंशोऽध्यायः ॥

---

1 निका 2 तिक्तोष्णभूयिष्ठौ 3 मुख्यां साधु प्रयोगेन

## ॥ अथैकोनत्रिंशोऽध्यायः ॥

॥ अथातो भेषजकल्पं व्याख्यास्यामः ॥

॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥

### ॥ प्रशस्तं भेषजम् ॥

[1]धन्वे साधारणे देशे समे [2]सन्मृत्तिके शुचौ ।
शस्यते भेषजं जातं युक्तं वर्णरसादिभिः ॥ १

### ॥ भेषजग्रहणविधिः ॥

अथ कल्याणचरितः शुद्धः शुचिरुपोषितः ।
गृह्णीयादौषधं [3]सुस्थं स्थितं काले च कल्पयेत् ॥ २
सक्षीरं तदसंपत्तावनतिक्रान्तवत्सरम् ।
ऋते गुडघृतक्षौद्रधान्यकृष्णाविडङ्गतः ॥ ३

### ॥ पयःप्रभृतीनां ग्रहणे विशेषाः ॥

पयो [4]बाष्कयणं ग्राह्यं विण्मूत्रं [5]तच्च नीरुजाम् ।
[6]वयोबलवतां धातुपिच्छशृङ्गखुरादिकम् ॥ ४

### ॥ कषाययोनयो रसाः ॥

कषाययोनयः पञ्च रसा *लवणवर्जिताः ।

### ॥ पञ्चकषायकल्पनाः ॥

रसः कल्कः श्रृतः शीतः [7]फाण्टश्चेति विकल्पना ॥ ५
पञ्चधैव कषायाणां पूर्वं पूर्वं बलाधिकाः ।

### ॥ स्वरसादिलक्षणम् ॥

सद्यः समुद्धृतात् क्षुण्णाद् यः स्रवेत् [8]पटगालितात् ॥ ६

---

1 धन्ये    2 संस्कृतिके    3 स्वस्थं
4 बाष्पयणं    5 यच्च    6 पयो

* लवणस्य न कषाययोनित्वम् । स्वरसादिकल्पनाविशेषस्य तत्रासम्भवाद्विशिष्टगुणानुपलम्भाद्वा ।

7 पाण्ड    8 परिगालितात्

स्वरसः स समुद्दिष्टः ; कल्कः पिष्टो द्रवाप्लुतः ।
[1]चूर्णोऽप्लुतः ; शृतः क्वाथः ; शीतो [2]रात्रिं द्रवे स्थितः ॥ ७
सद्योऽभिषुत[3]पूतस्तु फाण्टः*

॥ प्रमाणादेरनवस्थितत्वम् ॥

तन्मानकल्पने ।
युञ्ज्याद् व्याध्यादिबलतस्तथा च वचनं मुनेः ॥ ८
[4]मात्राया न व्यवस्थास्ति व्याधिं कोष्ठं बलं वयः ।
आलोच्य देशं [5]कालं च योज्यास्तद्वच्च कल्पनाः ॥ ९

॥ स्वरसस्य मध्यममात्रा ॥

मध्यं तु मानं निर्दिष्टं स्वरसस्य [6]चतुष्पलम् ।

॥ कल्कस्य मानम् ॥

पेष्यस्य कर्षमालोड्यं तद् द्रवस्य [7]पलत्रये ॥ १०

॥ क्वाथमानम् ॥

[8]क्वाथं द्रव्यपले कुर्यात् [9]प्रस्थार्धं पादशेषितम् ।

॥ शीतफाण्टमानम् ॥

शीतं पले पलैः षड्भिः ; चतुर्भिस्तु [10]ततोऽपरम् ॥ ११

॥ सामान्यतः स्नेहकल्पः ॥

[11]स्नेहपाके त्वमानोक्तौ चतुर्गुणविवर्धितम् ।
कल्कस्नेहद्रवं योज्यं

॥ शौनकमते स्नेहकल्पः ॥

[12]अधीते शौनकः पुनः ॥ १२

---

1 चूर्णो घृतो मृतः 2 रात्रिप्रदे स्थितः 3 पूतस्तु फाण्ट

* अत्र, समुद्दिष्ट इत्यन्तं स्वरसस्य, पिष्टो द्रवाप्लुतः इति कल्कस्य, अप्लुत इति चूर्णस्य, शृत इति क्वाथस्य, रात्रिं द्रवे स्थित इति शीतस्य, सद्योऽभिषुतपूत इति फाण्टस्य च संग्रहेण लक्षणं प्रतिपाद्यते ।

4 मात्रायां न व्यवस्थां 5 नालोच्य 6 चतुष्कलम् 7 फल
8 क्षोदं 9 प्रस्थार्धं 10 ततो वरम् 11 पाने त्वमानोक्त 12 मथितेशानतः

स्नेहे सिद्ध्यति शुद्धाम्बु[1]निष्क्वाथस्वरसैः क्रमात् ।
कल्कस्य योजयेदंशं चतुर्थं षष्ठमष्टमम् ॥ १३

॥ स्नेहसिद्धिलक्षणम् ॥

[2]नाङ्गुल्याग्राहिता कल्के न स्नेहेऽग्नौ सशब्दता ।
वर्णादिसंपच्च [3]यदा तदैनं सिद्धमादिशेत् ॥ १४

॥ घृततैललेहानां पृथक् सिद्धिलक्षणम् ॥

[4]घृतस्य फेनोपशमस्तैलस्य तु तदुद्भवः ।
लेहस्य तन्तुमत्ताप्सु मज्जनं [5]शरणं न च ॥ १५

॥ स्नेहपाकत्रैविध्यम् ॥

[6]पाकस्तु त्रिविधो मन्दश्चिक्कणः [7]खरचिक्कणः ।

॥ मन्दादिलक्षणानि ॥

मन्दः कल्कसमे किट्टे चिक्कणो [8]मदनोपमे * ॥ १६
किञ्चित् सीदति कृष्णे च वर्त्यमाने च पश्चिमः ।
दग्धोऽ[9]त ऊर्ध्वं निष्कार्यः स्यादामस्त्वग्निमान्द्यकृत् ॥ १७

॥ पाकभेदानां प्रयोगभेदाः ॥

मृदुर्नस्ये खरोऽभ्यङ्गे वस्तौ पाने च चिक्कणः ।

॥ शाणादिमानपरिभाषा ॥

शाणं पाणितलं मुष्टिः [10]कुडवं प्रस्थमाढकम् ॥ १८
द्रोणं वहं च क्रमशो विजानीयाच्चतुर्गुणम् ।

॥ द्वैगुण्यपरिभाषा ॥

द्विगुणं योजयेदार्द्रं [11]कुडवादि तथा द्रवम् ॥ १९

---

1 निस्क्वाथ  2 नागवि  3 यथा तथैनं शीघ्रमाहरेत्
4 घृतस्यानोपशमः  5 कलुषं  6 पाकस्तु
7 खर  8 मसृणोपमे  * मदनोपमे-मधूच्छिष्टोपमे
9 तदोर्ध्वं  10 कुडुवं  11 कुडुवादि

॥ वारिप्रयोगः ॥

पेषणालोडने वारिं स्नेहपाके [1]च निर्दिशेत् ।

॥ मानविशेषानुक्तौ साम्यविधिः ॥

कल्पयेत् सदृशान् भागान् प्रमाणं यत्र नोदितम् ॥ २०

॥ कोललक्षणं पर्यायाश्च ॥

द्वौ शाणौ वटकं कोलं[2] बदरं द्रंक्षणश्च

॥ कर्षलक्षणं पर्यायाश्च ॥

नौ ।

अक्षः पिचुः पाणितलं सुवर्णं कवलग्रहः ॥ २१

कर्षो[3] बिडालपदकं तिन्दुकः पाणिमानिका ।

॥ शुक्तिलक्षणं पर्यायश्च ॥

शब्दान्यत्वमभिन्नार्थे शुक्तिरष्टमिका च तौ ॥ २२

॥ पललक्षणं पर्यायाश्च ॥

पलं प्रकुञ्चो बिल्वं च मुष्टिराम्रं [4]चतुर्थिका ।

॥ प्रसृताञ्जलिमानिकालक्षणम् ॥

द्वे पले प्रसृतस्तौ द्वावञ्जलिस्तौ तु मानिका ॥ २३

॥ आढकद्रोणयोः पर्यायाः ॥

आढकं भाजनं कंसो ; द्रोणः कुम्भो [5]घटोऽर्मणः ।

॥ तुलाभारयोर्लक्षणम् ॥

तुला पलशतं; तानि विंशतिर्भार उच्यते ॥ २४

॥ औषधस्य सौम्याग्नेयत्वम् ॥

हिमवद्विन्ध्यशैलाभ्यां प्रायो [6]व्याप्ता वसुन्धरा ।

सौम्यं पथ्यं च तत्राद्यमाग्नेयं वैन्ध्यमौषधम् ॥ २५

**इति श्रीश्रीनिवासपण्डितविरचितचिकित्सातिलके सूत्रस्थाने भेषजकल्पो नाम एकोनत्रिंशोऽध्यायः ॥**

---

1 तु 2 एवंरद्रङ्क्षमच्छ 3 भिताकपठकः सिन्दुकः
4 चतुर्दिका 5 स्टोमंणः 6 न्यासा

## ॥ अथ त्रिंशोऽध्यायः ॥

॥ अथातो नस्यविधिमध्यायं व्याख्यास्यामः ॥

॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥

॥ नस्यविषयास्तदुपपत्तिश्च ॥

[1]ऊर्ध्वजत्रुविकारेषु विशेषान्नस्यमिष्यते ।
नासा हि शिरसो द्वारं तेन तद् व्याप्य हन्ति तान् ॥ १

॥ विरेचननस्यार्हाः ॥

[2]विरेचनं शिरःशूलजाड्यस्यन्दगलामये ।
शोषगण्डक्रिमिग्रन्थिकुष्ठापस्मारपीनसे ॥ २

॥ बृंहणनस्यार्हाः ॥

बृंहणं [3]वातजे शूले सूर्यावर्ते स्वर[4]क्षये ।
नासास्यशोषे [5]वाक्सङ्गे कृच्छ्रबोधेऽपबाहुके ॥ ३

॥ शमननस्यार्हाः ॥

शमनं [6]नीलिकाव्यङ्गकेशदोषाक्षिरोगिषु ।

॥ शोधननस्यद्रव्याणि ॥

यथा[7]स्वं यौगिकैः स्नेहैर्यथास्वं च प्रसाधितैः ॥ ४
कल्कक्वाथादिभि[8]श्चाद्यं मधुपट्वासवैरपि ।

॥ बृंहणनस्यद्रव्याणि ॥

बृंहणं धन्वमांसोत्थरसासृक्[9]खपुरैरपि ॥ ५

॥ शमननस्यद्रव्याणि ॥

शमनं योजयेत् [10]पूर्वैः क्षीरेण सलिलेन च ।

॥ स्नेहनस्यम् ॥

[11]मर्शश्च प्रतिमर्शश्च द्विधा [12]स्नेहोऽत्र मात्रया ॥ ६

---

1 ऊर्ध्वो 2 विरेचनशूलजाड्य 3 वातजा 4 क्षरे
5 वाक्सङ्गे कृच्छ्रबोध 6 निलिका 7 स्वयोनिकैः 8 श्लोष्यं मधुवदृक्षीरविबृंहणम्
9 वसुकैरपि 10 स्पूर्वैः 11 मर्शश्च 12 स्नेहोऽपि

॥ अवपीडनस्यम् ॥

कल्काद्यैरवपीडस्तु सुतीक्ष्णैर्मूर्धरेचनैः ।

॥ चूर्णनस्यम् ॥

ध्मानं विरेचनश्चूर्णो युञ्ज्यात् तं मुखवायुना ॥ ७
[1]षडङ्गुलद्विमुखया नाड्या भेषजगर्भया ।
स हि भूरितरं दोषं चूर्णत्वादपकर्षति ॥ ८

॥ मर्शस्य प्रमाणभेदाः ॥

[2]प्रदेशिन्यङ्गुलीपर्वद्वयान्मग्नसमुद्धृतात् ।
यावत् पतत्यसौ बिन्दुर्दशाष्टौ षट् क्रमेण ते ॥ ९
[3]मर्शस्योत्कृष्टमध्योना मात्राः

॥ कल्कादेः प्रमाणभेदाः ॥

[4]ता एव च क्रमात् ।
[5]बिन्दुद्वयोनाः कल्कादेः

॥ नस्यानर्हाः ॥

योजयेन्न तु नावनम् ॥ १०
तोयमद्यगरस्नेहपीतानां पातुमिच्छताम् ।
भुक्तभक्तशिरःस्नातस्नातुकामसुतासृजाम् ॥ ११
नवपीनसवेगार्तसूतिकाश्वासकासिनाम् ।
शुद्धानां दत्तवस्तीनां तथानार्तवदुर्दिने ॥ १२
अन्यत्रात्ययिकाद् व्याधेः

॥ नस्यकालाः ॥

अथ नस्यं प्रयोजयेत् ।
प्रातः श्लेष्मणि ; मध्याह्ने पित्ते ; [6]सायंनिशोश्चले ॥ १३

---

1 षडङ्गुले 2 प्रदेशन्यंगुली सर्वपर्वामग्न 3 मर्शस्यो
4 तारित 5 बिन्दुद्वयेनाकल्कादे 6 सायं निशोष्यते

स्वस्थवृत्ते तु पूर्वाह्णे शरत्कालवसन्तयोः ।
शीते मध्यन्दिने ; ग्रीष्मे सायं ; वर्षासु सातपे ॥ १४

॥ व्याधिभेदेन नस्याभ्यासकालः ॥

वाताभिभूते [1]शिरसि हिध्मायामपतानके ।
मन्यास्तम्भे स्वरभ्रंशे सायंप्रातर्दिने दिने ॥ १५
एकाहान्तरमन्यत्र [2]सप्ताहं च तथाचरेत् ।

॥ नस्यप्रयोगक्रमः ॥

स्निग्धस्विन्नोत्तमाङ्गस्य प्राक्कृतावश्यकस्य च ॥ १६
निवातशयनस्थस्य जत्रूर्ध्वं स्वेदयेत् पुनः ।
अथोत्तानर्जुदेहस्य पाणिपादे प्रसारिते ॥ १७
किञ्चिदुन्नतपादस्य किञ्चिन्मूर्धनि नामिते ।
नासापुटं [3]पिधायैकं पर्यायेण निषेचयेत् ॥ १८
उष्णाम्बुतप्तं भैषज्यं प्रणाड्या पिचुनाथ वा ।

॥ प्रयुक्तमात्रे कर्तव्यम् ॥

दत्ते पाणितलस्कन्धहस्तकर्णादि मर्दयेत् ॥ १९

॥ आवस्थिकमूर्छाया मुपचारः ॥

मूर्छायां शीततोयेन सिञ्चेत् परिहरञ्छिरः ।

॥ शोधननस्यान्ते स्नेहनस्यम् ॥

स्नेहं रेचननस्यान्ते दद्याद् दोषाद्यपेक्षया ॥ २०

॥ नस्यपश्चात्कर्म ॥

नस्यान्ते वाक्छतं तिष्ठेदुत्तानो धारयेत् ततः ।
धूमं पीत्वा कवोष्णाम्बुकवलान् कण्ठशुद्धये ॥ २१

॥ सम्यक्स्निग्धलक्षणम् ॥

सम्यक् [4]स्निग्धे सुखोच्छ्वासस्वप्नबोधाक्षिपाटवम् ।

॥ अयोगस्निग्धलक्षणम् ॥

रूक्षेऽक्षिस्तब्धता शोषो नासास्ये मूर्धशून्यता ॥ २२

---

1 शिर 2 सप्ताहं 3 पिधायैकं 4 क्षीद्वे

॥ अतिस्निग्धलक्षणम् ॥

स्निग्धेऽति कण्डूगुरुताप्रसेकारुचिपीनसाः ।

॥ सम्यग्विरिक्तलक्षणम् ॥

सुविरिक्तेऽक्षिलघुतावक्त्रस्वर[1]विशुद्धयः ॥ २३

॥ अयोगातियोगलक्षणे ॥

दुर्विरिक्ते गदोद्रेकः क्षामतातिविरेचिते ।

॥ प्रतिमर्शार्हाः ॥

प्रतिमर्शः क्षतक्षीणबालवृद्धसुखात्मसु ॥ २४

प्रयोज्योऽकालपलिते

॥ प्रतिमर्शानर्हाः ॥

न त्विष्टो दुष्टपीनसे ।

[2]मद्ये पीतेऽबलश्रोत्रे क्रिमिदूषितमूर्धनि ॥ २५

[3]उत्कृष्टोत्क्लिष्टदोषेषु हीनमात्रतया हि सः ।

॥ प्रतिमर्शकालाः ॥

निशाहर्भुक्त[4]वान्ताहःस्वप्नाध्वश्रमरेतसाम् ॥ २६

शिरोऽभ्यञ्जनगण्डूष[5]प्रस्रावाञ्जनवर्चसाम् ।

[6]दन्तकाष्ठस्य हासस्य[7]योज्योऽन्तेऽसौ द्विबिन्दुकः ॥ २७

॥ उक्तकालेषु प्रतिमर्शजं फलम् ॥

पञ्चसु स्रोतसां शुद्धिः क्लमनाशस्त्रिषु क्रमात् ।

दृग्बलं पञ्चसु ततो दन्तदार्ढ्यं [8]मरुच्छमः ॥ २८

॥ नस्याद्यर्हवयोनिर्णयः ॥

[9]न नस्यमूनसप्ताब्दे नातीताशीतिवत्सरे ।

न चोनाष्टादशे धूमः [10]कवलो नोनपञ्चमे ॥ २९

---

1 विशुद्धये   2 मध्ये   3 उत्कृष्टो द्दिष्ट
4 वाताह   5 प्रस्रावाञ्जन   6 दन्ति
7 योज्यं ते   8 मरुत्समः   9 मनस्य   10 कवलोन्

न शुद्धिरूनदशमे न चातिक्रान्तसप्ततौ ।

॥ प्रतिमर्शावस्थयोः सर्ववयोऽर्हत्वम् ॥

आजन्ममरणं शस्तः [1]प्रतिमर्शस्तु वस्तिवत् ॥ ३०

॥ प्रतिमर्शप्रशंसा ॥

[2]मर्शवच्च गुणान् कुर्यात् स हि नित्योपसेवनात् ।
न चात्र यन्त्रणा नापि व्यापद्भ्यो मर्शवद् भयम् ॥ ३१

॥ स्वस्थस्य तैलनस्यविधिः ॥

तैलमेव च [3]नस्यार्थे नित्याभ्यासेन शस्यते ।
शिरसः श्लेष्मधामत्वात् स्नेहाः स्वस्थस्य नेतरे ॥ ३२

॥ अणुतैलम् ॥

[4]जीवन्तीजलदेवदारु[5]जलदत्वक्सेव्यगोपीहिमं
दार्वित्वङ्मधुक[6]प्लवागरु[7]वरीपुण्ड्राह्वबिल्वोत्पलम् ।
धावन्यौ सुरभि [8]स्थिरे क्रिमिहरं पत्रं त्रुटिं रेणुकां
किञ्जल्कं कमलोत्पलं शतगुणे दिव्याम्भसि क्वाथयेत् ॥ ३३

तैलाद् रसं दशगुणं परिशोष्य तेन
तैलं पचेत सलिलेन दशैव वारान् ।
पाके क्षिपेच्च दशमे सममाजदुग्धं
नस्यं महागुणमुशन्त्यणुतैलमेतत् ॥ ३४

॥ नस्यप्रयोजनानि ॥

घनोन्नतप्रसन्नत्वक्स्कन्धग्रीवास्यवक्षसः ।
सुगन्धिवदनाः स्निग्धनिस्वना विमलेन्द्रियाः ॥ ३५
दृढेन्द्रियास्त्वपलिता भवेयुर्नस्यशीलिनः ॥ ३६

॥ इति श्रीश्रीनिवासपण्डितविरचितचिकित्सातिलके सूत्रस्थाने नस्यविधिर्नाम त्रिंशोऽध्यायः ॥

---

1 प्रतिमांसस्तु   2 मर्शम्पश्च   3 नस्यार्थे   4 जीवन्ति
5 जलदत्वक्से   6 प्लीहा   7 वरि   8 स्थिते

## ॥ अथैकविंशोऽध्यायः ॥

॥ अथातो धूमविधिमध्यायं व्याख्यास्यामः ॥

॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥

॥ धूमस्य विषयाः ॥

जत्रूर्ध्वं कफवातोत्थविकाराणामजन्मने ।

[1]उच्छेदाय च जातानां पिबेद् धूमं सदाऽऽत्मवान् ॥ १

॥ धूमस्य त्रैविध्यम् ॥

स्निग्धो मध्यः स तीक्ष्णश्च वाते वातकफे कफे ।

॥ धूमानर्हाः ॥

योज्या न रक्तपित्तार्तिविरिक्तोदरमेहिषु ॥ २

[2]तिमिरोर्ध्वानिलाध्मानरोहिणीदत्तवस्तिषु ।

मद्यमत्स्यदधिक्षीरक्षौद्रस्नेहविषाशिषु ॥ ३

शिरस्य[3]भिहते पाण्डुरोगे जागरिते निशि ।

॥ अकालातिपीतधूमजव्यापदः ॥

रक्तपित्तान्ध्यबाधिर्यतृण्मूर्च्छामदमोहकृत् ॥ ४

धूमोऽ[4]कालेऽतिपीतो वा

॥ धूमव्यापच्चिकित्सासंग्रहः ॥

तत्र शीतो विधिर्हितः ।

॥ मृदुधूमयोग्यकालाः ॥

क्षुतजृम्भितविण्मूत्र[5]स्त्रीसेवाशस्त्रकर्मणाम् ॥ ५

हासस्य दन्तकाष्ठस्य धूममन्ते पिबेन्मृदुम् ।

॥ मध्यमधूमकालाः ॥

कालेष्वेषु निशाहारनावनान्ते च मध्यमम् ॥ ६

---

1 कर्मदायुक्ष  2 तिमिरोनिलोध्मानकोहिणी
3 भिहिते  4 कामो  5 स्त्रिके

॥ शोधनधूमकालाः ॥

निद्रानस्याञ्जनस्नानच्छर्दितान्ते विरेचनम् ।

॥ धूमनेत्रकल्पना ॥

वस्तिनेत्रसमद्रव्यं त्रिकोणं कारयेदृजुम् ॥ ७

मूलाग्रेऽङ्गुष्ठकोलास्थिप्रवेशं धूम[1]नेत्रकम् ।

॥ धूमनेत्रप्रमाणम् ॥

तीक्ष्णस्नेहनमध्येषु त्रीणि चत्वारि पञ्च च ॥ ८

अङ्गुलानां क्रमात् पातुः प्रमाणेनाष्टकानि तत् ।

॥ धूमपानविधिः ॥

ऋजूप[2]विष्टस्तच्चेता विवृतास्यस्त्रिपर्ययम् ॥ ९

पिधायच्छिद्रमेकैकं धूमं नासिकया पिबेत् ।

॥ दोषस्थानभेदेन धूमपाने विशेषः ॥

प्राक् पिबेन्नासयोत्क्लिष्टे दोषे घ्राणशिरोगते ॥ १०

उत्क्लेशनार्थं वक्त्रेण विपरीतं तु कन्धरे ।

॥ धूमोद्वमे नियमः ॥

मुखेनैवोद्वमेद् धूमं नासया दृग्विघातकृत् ॥ ११

आक्षेपमोक्षैः [3]पातव्यो धूमस्तु त्रिस्त्रिभिस्त्रिभिः ।

॥ स्निग्धादिधूमानामावृत्तौ व्यवस्था ॥

अह्नः सकृत् पिबेत् स्निग्धं द्विर्मध्यं शोधनं परम् ॥ १२

त्रिश्चतुर्वा

॥ मृदुधूमस्य द्रव्याणि ॥

मृदौ तत्र द्रव्याण्यगरुगुग्गुलु ।

मुस्तास्थौणेयकालेय[4]नलदोशीरवालकम् ॥ १३

वराङ्ग[5]कौन्तीमधुकं बिल्व[6]मज्जैलवालुकम् ।

श्रीवेष्टकं सर्जरसं [7]ध्यामकं मदनं प्लवम् ॥ १४

---

1 नेत्रकम् 2 दिष्ट 3 आरम्भः समघुस्तु त्रिभिस्त्रिभिः

4 नद रोचि 5 कान्ति 6 मज्जैव वालुकम् 7 धूमकं

सल्लकं कुङ्कुमं माषा यवाः कुन्दुरुकं तिलाः ।
स्नेहः फलानां साराणां मेदो मज्जा वसा घृतम् ॥ १५

॥ मध्यमधूमस्य द्रव्याणि ॥

शमने सल्लकी लाक्षा [1]पृथ्वीका कमलोत्पलम् ।
न्यग्रोधोदुम्बराश्वत्थप्लक्षलोध्र[2]त्वचः सिताः ॥ १६
यष्टीमधु सुवर्णत्वक् पद्मकं रक्तयष्टिका ।
गन्धा[3]श्चाकुष्ठतगराः

॥ तीक्ष्णधूमस्य द्रव्याणि ॥

तीक्ष्णे ज्योतिष्म[4]तीनिशे ॥ १७
दशमूलमनोह्वाललाक्षाः [5]श्वेता फलत्रयम् ।
गन्धद्रव्याणि तीक्ष्णानि गणो मूर्धविरेचनः ॥ १८

॥ धूमवर्तिविधिः ॥

[6]जले स्थितामहोरात्रमिषीकां द्वादशाङ्गुलाम् ।
[7]पिष्टैर्धूमौषधैरेवं पञ्चकृत्वः [8]प्रलेपयेत् ॥ १९
वर्तिरङ्गुष्ठवत् स्थूला यवमध्या यथा भवेत् ।
छायाशुष्कां निगर्भां तां स्नेहाभ्यक्तां [9]यथायथम् ॥ २०
धूमनेत्रार्पितां पातुमग्निदग्धां प्रयोजयेत् ।

॥ कासिनो धूमपाने विशेषः ॥

[10]शरावसंपुटच्छिद्रे नालीं न्यस्य दशाङ्गुलाम् ॥ २१
[11]अष्टाङ्गुलां वा वक्त्रेण कासवान् धूममापिबेत् । २२

---

1 पृथ्विका 2 तृषा 3 श्चाकुष्ठतगराः
4 तिमिष्ठे 5 श्वेतायक 6 जीवे
7 विष्टेधू 8 प्रवेपयेत् 9 यथायथा
10 शीताव 11 अष्टाङ्गुकोद्दावक्रेण कानहां

॥ धूमपानप्रयोजनम् ॥

कासः श्वासः पीनसो विस्वरत्वं
पूतिर्गन्धः पाण्डुता केशदोषः ।
कर्णास्याक्षि[1]स्रावकण्डूर्तिजाड्यं
तन्द्रा हिध्मा[2]धूमपं न स्पृशन्ति ॥ २३

इति श्रीश्रीनिवासपण्डितविरचिते चिकित्सातिलके
सूत्रस्थाने धूमविधिर्नाम एकत्रिंशोऽध्यायः ॥

---

1 स्रावकं गर्ति 2 धूमपङ्कस्त्

# ॥ अथ द्वात्रिंशोऽध्यायः ॥

**॥ अथातो गण्डूषविधिमध्यायं व्याख्यास्यामः ॥**

॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥

[1]चतुष्प्रकारो गण्डूषः स्निग्धः शमनशोधनौ ।
रोपणश्च

**॥ गण्डूषभेदानां प्रत्येकं विषयाः ॥**

त्रयस्तत्र त्रिपु योज्याश्चलादिषु ॥ १

अन्त्यो व्रणघ्नः

**॥ स्निग्धगण्डूपस्य द्रव्याणि ॥**

स्निग्धोऽत्र स्वाद्वम्लपटुसाधितैः ।
स्नेहैः

**॥ शमनगण्डूपस्य द्रव्याणि ॥**

संशमनस्तिक्तकषायै[2]र्मधुरौषधैः ॥ २

**॥ शोधनगण्डूपस्य द्रव्याणि ॥**

शोधनस्तिक्तकट्वम्लपटूष्णैः

**॥ रोपणस्य द्रव्याणि ॥**

रोपणः पुनः ।
कषायतिक्तकैः

**॥ साधारणतो गण्डूषद्रव्याणि ॥**

तत्र स्नेहक्षीरमधूदकम् ॥ ३
शुक्तं [3]मद्यं रसं मूत्रं धान्याम्लं च यथायथम् ।
कल्कैर्युक्तं विपक्वं वा यथास्पर्शं प्रयोजयेत् ॥ ४

**॥ तिलकल्कोदकगुणाः ॥**

दन्तहर्षे दन्तचाले मुखरोगे च वातिके ।
सुखोष्णमथ शीतं वा तिलकल्कोदकं [4]हितम् ॥ ५

---

1 चतुष्प्रकारो   2 मधुरौषधैः   3 मद्यं   4 हितद्

॥ नित्यौपयिकगण्डूषः ॥

गण्डूष[1]धारणे नित्यं तैलं मांसरसोऽथ वा ।

॥ ऊषादाहादौ गण्डूषः ॥

ऊषादाहार्दिते पाके क्षते चागन्तुसंभवे ॥ ६

विषे क्षाराग्निदग्धे च सर्पिर्धार्यं पयोऽथ वा ।

॥ मधुगण्डूषगुणाः ॥

वैशद्यं जनयित्वाऽऽस्ये संदधाति मुखे व्रणान् ॥ ७

दाहतृष्णाप्रशमनं मधुगण्डूष[2]धारणम् ।

॥ धान्याम्लगण्डूषगुणाः ॥

धान्याम्लमास्यवैरस्यमलदौर्गन्ध्यनाशनम् ॥ ८

[3]तदेवालवणं शीतं मुख[4]शोषहरं परम् ।

॥ क्षारोदकगण्डूषगुणः ॥

आशु क्षाराम्बुगण्डूषो भिनत्ति श्लेष्मणश्चयम् ॥ ९

॥ उष्णोदकगण्डूषगुणः ॥

सुखोष्णोदकगण्डूषैर्जायते वक्त्रलाघवम् ।

॥ गण्डूषविधिः ॥

निवाते [5]सातपे स्विन्नमृदितस्कन्धकन्धरः ॥ १०

गण्डूषमपिबन् किञ्चिदुन्नतास्यो विधारयेत् ।

॥ गण्डूषधारणावधिः ।

कफपूर्णास्यता यावत् स्रवद्घ्राणाक्षताथ वा ॥ ११

॥ गण्डूषकवलयोर्मिथो भेदः ॥

असं[6]चार्यो मुखे पूर्णे [7]गण्डूषः कवलोऽन्यथा । १२

॥ कवलग्रहसाध्या रोगाः ॥

मन्याशिरःकर्णमुखाक्षि[8]रोगाः

प्रसेक[9]कण्ठामयवक्त्रशोषाः ।

---

1 दारणे 2 धारणम् 3 तदेव च 4 कोप
5 सातपी 6 चार्यो 7 कण्डूषक 8 रोगान् 9 कण्ठामयवक्त्रशोषान्

हृल्लासतन्द्रारुचिपीनसाद्याः

साध्या विशेषात् कवलग्रहेण ॥ १३

॥ इति गण्डूषाध्याये गण्डूषकवलग्रहवर्गः ॥

॥ प्रतिसारणम् ॥

कल्को रसक्रिया चूर्णं त्रिविधं प्रतिसारणम् ।

युञ्ज्यात् तत् कफरोगेषु गण्डूषविहितौषधैः ॥ १४

॥ इति गण्डूषाध्याये गण्डूषादिविधिर्नाम प्रथमो वर्गः ॥

* * *

॥ अथ मुखालेपनवर्गः ॥

मुखालेपस्त्रिधा दोषविषहा वर्णकृच्च सः ।

॥ उष्णशीतयोः प्रत्येकं विषयाः ॥

उष्णो वातकफे शस्तः शेषेष्वत्यर्थशीतलः ॥ १

॥ प्रमाणत्रैविध्यम् ॥

[1]त्रिप्रमाणश्चतुर्भागत्रिभागार्धाङ्गुलोन्नतः ।

॥ शुष्कधारणप्रतिषेधः ॥

अशुष्कस्य स्थितिस्तस्य शुष्को दूषयति [2]च्छविम् ॥ २

तमार्द्रयित्वापनयेत् तदन्तेऽभ्यङ्गमाचरेत् ।

॥ मुखालेपिभिर्वर्ज्याः ॥

विवर्जयेद् दिवास्वप्नभाष्याग्न्यातपशुक्क्रुधः ॥ ३

॥ मुखालेपानर्हाः ॥

न योज्यः पीनसेऽजीर्णे [3]दत्तनस्ये हनुग्रहे ।

अरोचके जागरिते

॥ मुखालेपस्य फलम् ॥

स तु हन्ति सुयोजितः ॥ ४

---

1 तीव्रमाणश्च 2 च्छविम् 3 दत्तनस्ये

अकालपलितव्यङ्ग[1]वलीतिमिरनीलिकाः ।

॥ ऋतुभेदेन मुखालेपद्रव्याणि ॥

कोलमज्जा वृषान्मूलं शाबरं गौरसर्षपाः ॥ ५

सिंहीमूलं तिलाः कृष्णा दार्वीत्वङ्निस्तुषा यवाः ।

दर्भमूलं [2]हिमोशीरशिरीषमिशितण्डुलाः ॥ ६

कुमुदोत्पलकल्हारदूर्वामधुकचन्दनम् ।

कालेयकं तिलोशीरं [3]मांसीतगरपद्मकम् ॥ ७

तालीसगुन्द्रापुण्ड्राह्वयष्टि[4]काशनतागरु ।

[5]इत्यर्धचोदिता लेपा हेमन्तादिषु षट् स्मृताः ॥ ८

॥ मुखालेपगुणाः ॥

मुखालेपनशीलानां दृढं भवति दर्शनम् ।

वदनं चापरिम्लानं श्लक्ष्णं तामरसोपमम् ॥ ९

॥ इति गण्डूषाध्याये मुखलेपनविधिर्नाम द्वितीयो वर्गः ॥

* * *

## ॥ अथ मूर्धतैलवर्गः ॥

॥ मूर्धतैलभेदाः ॥

अभ्यङ्ग[6]सेकपिचवो वस्तिश्चेति चतुर्विधम् ।

मूर्धतैलं बहुगुणं तद् विद्यादुत्तरोत्तरम् ॥ १

॥ अभ्यङ्गस्य विषयाः ॥

तत्राभ्यङ्गः प्रयोक्तव्यो रौक्ष्यकण्डूमलादिषु ।

॥ परिषेकस्य विषयाः ॥

अरूंषिका[7]शिरस्तोददाहपाकव्रणेषु तु ॥ २

परिषेकः

॥ पिचोर्विषयाः ॥

[8]पिचुः केश[9]शातस्फुटनधूमने ।

नेत्रे स्तब्धे [10]च

॥ शिरोवस्तेर्विषयाः ॥

वस्तिस्तु प्रसुप्त्यर्दितजागरे ॥ ३

---

1 वरितिमि का: 2 हिमो शरो 3 मांक्षिंत गर 4 कासरतागरु 5 इत्यर्थ
6 कफीषवो 7 सिरस्तोत 8 पथः 9 कात 10 तु

नासास्यशोषे [1]तिमिरे शिरोरोगे च दारुणे* ।

॥ शिरोबस्तिविधिः ॥

विधिस्तस्य निषण्णस्य [2]पीठे जानुसमे मृदौ ॥ ४

शुद्धाक्तस्विन्नदेहस्य दिनान्ते गव्यमाहिषम् ।

द्वादशाङ्गुलविस्तीर्णं चर्म पट्टं शिरस्समम् ॥ ५

[3]आकर्णबन्धनस्थानं ललाटे पट्टवेष्टितम् ।

चेलवेणिकया बद्ध्वा माषकल्केन लेपयेत् ॥ ६

ततो [4]यथाव्याधि शृतं स्नेहं [5]कोष्णं निषेचयेत् ।

ऊर्ध्वं केशभुवो यावदङ्गुलं

॥ धारणकालः ॥

धारयेच्च [6]तम् ॥ ७

आ वक्त्रनासिकाक्लेदाद् दशाष्टौ [7]पट् चलादिषु ।

मात्रासहस्रा[8]ण्यरुजे त्वेकं

॥ पश्चात् कर्म ॥

स्कन्धं विमर्दयेत् ॥ ८

मुक्तस्नेहस्य

॥ शिरोबस्त्यावृत्तौ व्यवस्था ॥

[9]परमं सप्ताहं तस्य सेचनम् ।

॥ कर्णपूरणविधिः ॥

धारयेत् पूरणं कर्णे कर्णमूलं विमर्दयेत् ॥ ९

रुजाया मार्दवं यावन्मात्राशतमवेदने ।

॥ मात्राया लक्षणम् ॥

यावत् पर्येति हस्ताग्रं दक्षिणं जानुमण्डलम् ॥ १०

---

1 तिमिरि 2 पिरे 3 अ .... 4 न्यथाव्याधिभृतं

*दारुणे इति शिरोरोगस्य विशेषणम् । तल्लक्षणं च "कण्डूकेशच्युतिस्वापरौक्ष्यकृत् स्फुटनं त्वचः । सुसूक्ष्मं कफवाताभ्यां विद्याद्दारुणकं तु तत् ॥" इति ।

5 स्निग्धं निषेचयेत् 6 चक्षतम् 7 षट्चलादिषु

8 ण्यस्वेरयकं 9 परमसप्ताहं

निमेषोन्मेषमात्रेण समं मात्रा तु सा स्मृता ।

॥ मूर्धतैलगुणाः ॥

कचशतनसितत्वपिञ्जरत्वं

परिलुठनं शिरसः समीररोगान् ।

[1]जयति जनयतीन्द्रियप्रसादं

स्वरहनुमूर्ध[2]बलं च मूर्धतैलम् ॥ ११

इति श्रीश्रीनिवासपण्डितविरचिते चिकित्सातिलके सूत्रस्थाने गण्डूषादिमुखालेपमूर्धतैलविधिर्नाम द्वात्रिंशोऽध्यायः ॥

---

1 जनयतीति जयति 2 पिक

## ॥ अथ त्रयस्त्रिंशोऽध्यायः ॥

॥ [1]अथात आश्चोतनाञ्जनविधिमध्यायं व्याख्यास्यामः ॥

॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥

### ॥ आश्चोतनवर्गः ॥

सर्वेषा[2]मक्षिरोगाणामादावाश्चोतनं हितम् ।
रुक्तोदकण्डुघर्षाश्रुदाहरागनिबर्हणम् ॥ १

॥ दोषभेदेन शीतोष्णविधिः ॥

उष्णं वाते कफे कोष्णं [3]तच्छीतं रक्तपित्तयोः ।

॥ आश्चोतनविधिः ॥

निवातस्थस्य वामेन पाणिनोन्मील्य लोचने ॥ २
शुक्तौ प्रलम्बया[4]न्येन पिचुवर्त्या कनीनके ।
दश द्वादश वा बिन्दून् द्व्यङ्गुलादवसेचयेत् ॥ ३

॥ पश्चात् कर्म ॥

ततः प्रमृज्य मृदुना चेलेन कफवातयोः ।
अन्येन कोष्णपानीये प्लुतेन स्वेदयेन्मृदु ॥ ४

॥ अत्युष्णतीक्ष्णजा व्यापदः ॥

अत्युष्णतीक्ष्णं रुग्रागदृङ्नाशायाक्षिसेचनम् ।

॥ अतिशीतजा व्यापदः ॥

अतिशीतं [5]तु कुरुते निस्तोदस्तम्भवेदनाः ॥ ५

॥ अतिमात्रजा व्यापदः ॥

कषायवर्त्मतां घर्षं कृच्छ्रादुन्मेषणं बहु ।

॥ अत्यल्पापरिस्रुतदोषौ ॥

विकार[6]वृद्धिमत्यल्पं संरम्भमपरिस्रुतम् ॥ ६

---

1 अथातो भजन  2 सेव रोग.... वात  3 तच्छितं
4 न्योन्य  5 गुरुते  6 वृद्धि

॥ आश्चोतनगुणाः ॥

गत्वा सन्धिशिरोघ्राणमुखस्रोतांसि भेषजम् ।
ऊर्ध्वगान् नयने न्यस्तमपवर्तयते मलान् ॥ ७

॥ इत्याश्चोतनवर्गः ॥

* * *

## ॥ अथाञ्जनवर्गः ॥

॥ अञ्जनस्य विषयाः ॥

अथाञ्जनं शुद्धतनो[1]र्नेत्रमात्राश्रये मले ।
पक्वलिङ्गेऽल्पदोषादिकण्डूपैच्छिल्यलक्षिते ॥ १
मन्दघर्षाश्रुरोगेऽक्षिण प्रयोज्यं घन[2]दूषिके ।
[3]आर्ते पित्तकफासृग्भिर्मारुतेन विशेषतः ॥ २

॥ अञ्जनस्य फलकृतं त्रैविध्यम् ॥

लेखनं रोपणं दृष्टिप्रसादनमिति त्रिधा ।

॥ लेखनाञ्जनस्य द्रव्याणि ॥

अञ्जनं लेखनं तत्र कषायाम्लपटूषणैः ॥ ३

॥ रोपणप्रसादनयोर्द्रव्याणि ॥

रोपणं तिक्तकैर्द्रव्यैः स्वादुशीतैः प्रसादनम् ।

॥ प्रत्यञ्जनस्वरूपम् ॥

तीक्ष्णाञ्जनाभिसंतप्ते नयने तत्प्रसादनम् ॥ ४
प्रयुज्यमानं लभते प्रत्यञ्जनसमाह्वयम् ।

॥ लेखनाञ्जनशलाका ॥

दशाङ्गुला धनुर्मध्या शलाका [4]मुकुलानना ॥ ५
प्रशस्ता लेखने ताम्री

॥ रोपणाञ्जनशलाका ॥

रोपणे काललोहजा ।
[5]अङ्गुली च

॥ प्रसादनाञ्जनशलाका ॥

सुवर्णोत्था रूप्यजा च प्रसादनी ॥ ६

---

1 तीर्थमूत्राश्रये 2 दूषिते 3 अर्थे 4 मुखानना: 5 अङ्गुली

॥ अञ्जनस्य स्वरूपतस्त्रैविध्यम् ॥

पिण्डो रसक्रिया चूर्णस्त्रिधैवाञ्जनकल्पना ।
गुरौ मध्ये लघौ दोषे तान् क्रमेण प्रयोजयेत् ॥ ७

॥ पिण्डाञ्जनस्य मात्रा ॥

पिण्डस्य तीक्ष्णद्रव्यस्य मृदुद्रव्यकृतस्य च ।
हरेणुमात्रं द्विगुणं प्रमाणं कथयन्त्यपि ॥ ८

॥ रसक्रियामात्रा ॥

रसक्रियायामप्याहुर्विलङ्गफलमात्रकम् ।
प्रमाणं द्विगुणं तीक्ष्णे

॥ चूर्णाञ्जनमात्रा ॥

[1]चूर्णं तु त्रिगुणं मृदौ ॥ ९

॥ अञ्जनानर्हौ कालौ ॥

* निशि स्वप्नेन [2]मध्याह्ने म्लाने नोष्णगभस्तिभिः ।
अक्षिरोगाय दोषाः स्युः[3]र्वर्धितोत्पीडितद्रुताः ॥ १०

॥ अञ्जनकालौ ॥

प्रातः सायं च [4]तच्छान्त्यै व्यभ्रेऽर्केऽतो[5]ऽञ्जयेत् सदा ।

॥ मतान्तरेण दिवाञ्जननिषेधः ॥

वदन्त्यन्ये तु न दिवा प्रयोज्यं तीक्ष्णमञ्जनम् ॥ ११
विरेकदुर्बलं चक्षुरादित्यं प्राप्य सीदति ।

॥ तन्मतेन रात्र्यञ्जनोपपत्तिः ॥

स्वप्नेन रात्रौ कालस्य सौम्यत्वेन च तर्पिता ॥ १२
[6]शीतसात्म्या दृगाग्नेयी स्थिरतां लभते पुनः ।

॥ स्वमतप्रतिपादनम् ॥

अत्युद्रिक्ते बलासे तु [7]लेखनीयेऽथ वा गदे ॥ १३
[8]काममह्न्यपि नात्युष्णे तीक्ष्णमक्ष्णि प्रयोजयेत् ।

॥ स्वमतस्योपपत्तिप्रदर्शनम् ॥

अश्मनो जन्म लोहस्य तत एव च तीक्ष्णता ॥ १४

---

1 चूर्णं मृदौ ★ निशि स्वप्नेन, मध्याह्ने उष्णगभस्तिभिश्च म्लाने अक्षिणि नाञ्जयेत्
2 मध्याह्ने 3 वर्धितो तन्द्रुकद्युतिः 4 यथार्न्येवै 5 ञ्जयेत्सदा
6 वसात्म्यामृगदृगाग्नेयी 7 लेखनीयोथवा 8 काममण्यपि

उपघातोऽपि तेनैव तथा नेत्रस्य तेजसः ।

॥ रात्र्यञ्जनेऽपि क्वचिदनुपपत्तिः ॥

न रात्रावपि शीतेऽति [1]नेत्रे तीक्ष्णाञ्जनं हितम् ॥ १५

दोषमस्रावयत् [2]स्तम्भकण्डूजाड्यादिकारि [3]तत् ।

॥ अञ्जनानर्हाः ॥

नाञ्जयेद् भीतवमित[4]विरिक्ताशितवेगिते ॥ १६

[5]क्रुद्धज्वरिततान्ताक्षिशिरोरुक्शोकजागरे ।

अदृष्टेऽर्के शिरस्स्नाते पीतयोर्धूममद्ययोः ॥ १७

अजीर्णेऽ[6]ग्न्यर्कसंतप्ते दिवा सुप्ते पिपासिते ।

॥ अञ्जनदोषाः ॥

अतितीक्ष्णमृदुस्तोकबह्वच्छघनकर्कशम् ॥ १८

अत्यर्थशीतलं तप्तमञ्जनं [7]नावचारयेत् ।

॥ अञ्जितमात्रे कर्तव्यम् ॥

[8]अथानुन्मीलयन् दृष्टिमन्तः संचारयेच्छनैः ॥ १९

अञ्जिते [9]वर्त्मनी किञ्चिच्चालयेच्चैवमञ्जनम् ।

नेत्रं व्याप्नोति सहसा

॥ अञ्जितमात्रे परिहार्याणि ॥

[10]न चोन्मेषनिमेषणम् ॥ २०

निष्पीडनं वा वर्त्मभ्यां क्षालनं वा समाचरेत् ।

॥ क्षालनविधिः ॥

[11]अपेतौषधसंरम्भं निर्वृतं नयनं यदा ॥ २१

---

1 नेत्र 2 स्तम्भकण्डू ज्याड्यादि 3 तम् 4 विरक्त
5 क्रुद्ध 6 ऽर्के 7 नोपचारयेत् 8 अथानुमीलये चार
9 वर्त्मनि 10 नचोन्मेष 11 अपीतौषधि

व्याधिदोषर्तुयोग्याभिरद्भिः प्रक्षालयेत् तदा ।

॥ शोधनक्रमः ॥

दक्षिणाङ्गुष्ठकेनाक्षि ततो वामं सवाससा ॥ २२

ऊर्ध्वे वर्त्मनि संगृह्य शोध्यं वामेन चेतरत् ।

॥ अशोधने दोषाः ॥

वर्त्मप्रासाञ्जनाद् [1]दोषो रोगान् कुर्यात् ततोऽन्यथा ॥ २३

॥ कण्डूजाड्ये प्रतिक्रिया ॥

कण्डू[2]जाड्येऽञ्जनं तीक्ष्णं धूमं वा योजयेत् पुनः ।

॥ तीक्ष्णाञ्जनजव्यापत्प्रतिक्रिया ॥

तीक्ष्णाञ्जनाभितप्ते तु तूर्णं प्रत्यञ्जनं हितम् ॥ २४

॥ इति श्रीश्रीनिवासपण्डितविरचितचिकित्सातिलके सूत्रस्थाने आश्चोतनाञ्जनविधिर्नाम त्रयस्त्रिंशोऽध्यायः ॥

---

1 दोषान्कुर्या 2 जाड्याञ्जनम्

## ॥ अथ चतुस्त्रिंशोऽध्यायः ॥

### ॥ अथातस्तर्पणपुटपाकविधिमध्यायं व्याख्यास्यामः ॥

॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥

### ॥ तर्पणवर्गः ॥

#### ॥ तर्पणस्य विषयाः ॥

नयने [1]ताम्यति स्तब्धे शुष्के रूक्षेऽभिघातिते ।
वातपित्तातुरे जिह्मे शीर्णपक्ष्माविलेक्षणे ॥ १
कृच्छ्रोन्मीलसिराहर्ष[2]सिरोत्पाततमोऽर्जुने ।
स्यन्दमन्दान्यतोवातवातपर्ययशुक्रकैः ॥ २
आतुरे शान्तरागाश्रुशूलसंरम्भदूषिके ।
निवाते तर्पणं योज्यं शुद्धयोर्मूर्धकाययोः ॥ ३
काले साधारणे प्रातः सायं चोत्तानशायिनः ।

#### ॥ तर्पणविधिः ॥

[3]यवमापमयीं [4]पालीं नेत्रकोशाद् बहिः समाम् ॥ ४
द्व्यङ्गुलोच्चां दृढां कृत्वा [5]यथास्वं सिद्धमावपेत् ।
सर्पि[6]र्निमीलिते नेत्रे तप्ताम्बुप्रविलायितम् ॥ ५
नक्तान्ध[7]वाततिमिरकृच्छ्र[8]बोधादिके वसाम् ।
आ पक्ष्माग्रात्

#### ॥ तर्पणधारणकालः ॥

[9]अथोन्मेषं शनकैस्तस्य कुर्वतः ॥ ६
मात्रा विगणयेत् तत्र वर्त्मसन्धिसितासिते ।
दृष्टौ च क्रमशो व्याधौ [10]शतं त्रीणि च पञ्च च ॥ ७
शतानि सप्त चाष्टौ च दश [11]मन्थेऽनिले दश ।
पित्ते षट् स्वस्थवृत्ते च बलासे पञ्च धारयेत् ॥ ८

---

1 ताम्यरि    2 सितोत्पात    3 यत    4 पाठीं
5 यथार्थं    6 सर्पिर्निमीते    7 पात    8 बोधादिकी
9 योन्मेषं    10 शीतं    11 मन्दे

॥ तर्पणपश्चात्कर्म ॥

कृत्वापाङ्गे ततो द्वारं स्नेहं [1]पात्रे निगाल्येत् ।
[2]पिबेच्च धूमं, नेक्षेत व्योम रूपं च भासुरम् ॥ ९

॥ तर्पणावृत्तिक्रमः ॥

इत्थं प्रतिदिनं वायौ पित्ते त्वेकान्तरं कफे ।
स्वस्थे च द्व्यन्तरं दद्यादा तृप्तेरिति योजयेत् ॥ १०

॥ तर्पणसम्यग्योगलक्षणम् ॥

प्रकाशक्षमता [3]स्वास्थ्यं विशदं लघु लोचनम् ।
तृप्ते

॥ अयोगातियोगलक्षणम् ॥

विपर्ययोऽतृप्ते ; तृप्तेऽति श्लेष्मतो रुजः ॥ ११

॥ इति तर्पणवर्गः ॥

* ☼ *

## ॥ अथ पुटपाकवर्गः ॥

॥ पुटपाकस्य प्रयोजनम् ॥

स्नेह[4]पीता तनुरिव क्लान्तदृष्टिर्हि सीदति ।
तर्पणानन्तरं [5]तस्माद् दृग्बलाधानकारिणम् ॥ १
पुटपाकं प्रयुञ्जीत पूर्वोक्तेष्वेव यक्ष्मसु ।

॥ पुटपाकभेदानां विषयाः ॥

स वाते स्नेहनः ; श्लेष्मसहिते लेखनो हितः ॥ २
दृग्दौर्बल्येऽनिले स्वस्थे पित्ते रक्ते प्रसादनः ।

॥ स्नेहनपुटपाकद्रव्याणि ॥

मूशय[6]प्रसहानूपमेदोमज्जवसामिषैः ॥ ३
स्नेहनं पयसा पिष्टैर्जीवनीयैश्च कल्पयेत् ।

॥ लेखनपुटपाकद्रव्याणि ॥

मृगपक्षियकृन्मांस[7]मुक्तायस्ताम्रसैन्धवैः ॥ ४

---

1 वार्त्रे 2 धूमं नेक्षेत व्योमेय पश्च 3 स्वास्थ्यं विशदं चलम्
4 पिता 5 दृग्बलाधान 6 प्रसवान् पचे 7 मुक्तायस्तार

स्रोतोजशङ्खफेनाद्यैर्लेखनं मस्तुकल्कितैः ।

**॥ प्रसादनपुटपाकद्रव्याणि ॥**

मृगपक्षियकृन्मज्जवसान्त्रहृदयामिषैः ॥ ५

मधुरैः सघृतैः [1]स्तन्यक्षीरपिष्टैः प्रसादनम् ।

**॥ पुटपाककल्पना ॥**

बिल्वमात्रं पृथक् पिण्डं मांसभेषजकल्कयोः ॥ ६

उरुबूक[2]वटाम्भोजपत्रैः स्निग्धादिषु क्रमात् ।

वेष्टयित्वा मृदा लिप्तं धवधन्वनगोमयैः ॥ ७

पचेत् प्रदीप्ते त्वग्न्याभं पक्वं [3]निष्पीड्य तद्रसम् ।

[4]नेत्रे तर्पणवद् युञ्ज्यात्

**॥ धारणकालाः शीतोष्णविधिश्च ॥**

शतं द्वे त्रीणि धारयेत् ॥ ८

रूक्षस्नेहन[5]मध्येषु कोष्णौ पूर्वौ हिमोऽपरः ।

**॥ पश्चात्कर्म योगादिलक्षणं च ॥**

धूमपोऽन्ते तयोरेव योगास्तत्र च तृप्तिवत् ॥ ९

**॥ तर्पणपुटपाकानर्हाः ॥**

तर्पणं पुटपाकं च नस्यानर्हे न योजयेत् ।

**॥ परिहारकाल उपचारश्च ॥**

[6]यावन्त्यहानि युञ्जीत [7]द्विस्ततो हितभाग् भवेत् ।

मालतीमल्लिकापुष्पैर्बद्धाक्षो [8]निवसेन्निशि ॥ १०

**॥ इति श्रीश्रीनिवासपण्डितविरचितचिकित्सातिलके सूत्रस्थाने तर्पणपुटपाकविधिर्नाम चतुर्स्त्रिंशोऽध्यायः ॥**

---

1 स्तन्य क्षीरपिष्टे 2 वटं भोज 3 निष्पाड्य 4 नेत्र
5 मधेषु 6 यावद्यहानि 7 द्विस्त्वा 8 निवसे

# ॥ अथ पञ्चत्रिंशोऽध्यायः ॥

॥ अथातो यन्त्रविधिमध्यायं व्याख्यामः ॥

॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥

### ॥ यन्त्रलक्षणम् ॥

नानाविधानां शल्यानां नानादेशनिवासिनाम् ।
आहर्तुमभ्युपायो यस्तद्यन्त्रं [1]यच्च दर्शने ॥ १
अर्शो[2]भगन्दरादीनां शस्त्रक्षाराग्नियोजने ।
शेषाङ्गपरिरक्षायां तथा वस्त्यादिकर्मणि ॥ २
घटिकालाबुशृङ्गं च जाम्बोष्ठादीनि यानि च ।

### ॥ यन्त्रभेदानामानन्त्यम् ॥

अनेकरूपकार्याणि यन्त्राणि विविधान्यतः ॥ ३
[3]विकल्प्य कल्पयेद् बुद्ध्या यथास्थूलं तु वक्ष्यते ।

### ॥ स्वस्तिकयन्त्राणि ॥

तुल्यानि कङ्कसिंहर्क्षकाकादिमृगपक्षिणाम् ॥ ४
मुखैर्मुखानि यन्त्राणां कुर्यात् तत्संज्ञकानि च ।
अष्टा[4]दशाङ्गुलायामान्यायसानि च भूरिशः ॥ ५
[5]मसूराकारपर्यन्तैः कण्ठे बद्धानि कीलकैः ।
[6]विद्यात् स्वस्तिकयन्त्राणि [7]मूलेऽङ्कुशनतानि च ॥ ६

### ॥ स्वस्तिकयन्त्रप्रयोजनम् ॥

तैर्दृढैरस्थि[8]संलग्नशल्याहरणमिष्यते ।

### ॥ षोडशाङ्गुलौ संदंशौ ॥

कीलबद्धविमुक्ताग्रौ [9]संदंशौ षोडशाङ्गुलौ ॥ ७

---

1 यच्च 2 भगंदरं स्व 3 विकल्पकल्पायो 4 दशांगुकान्यम्या
5 कपर्यन्तैः 6 दद्यात् 7 मूकाङ्कुशन 8 कमैश्शल्य। 9 संदशोषौ दशाङ्गुळो

त्वक्सिरास्नायुपिशितलग्नशल्यावकर्षणौ ।

॥ षडङ्गुलसंदंशः ॥

षडङ्गुलोऽन्यो हरणे सूक्ष्मशल्यापकर्षणः ॥ ८

॥ मचुटीसंदंशः ॥

मचुटी सूक्ष्मदन्तर्जु[1]मूले रुचकभूषणा ।

गम्भीरव्रण[2]मांसानाममर्मणः शोषितस्य च * ॥ ९

॥ तालयन्त्रे ॥

[3]द्वे द्वादशाङ्गुले मत्स्यताल[4]वद् द्व्येकतालके ।

तालयन्त्रे स्मृते कर्ण[5]नाडीशल्यापहारिणी ॥ १०

॥ नाडीयन्त्राणि ॥

[6]नाडीयन्त्राणि सुषिराण्येकानेकमुखानि च ।

स्रोतोगतानां [7]शल्यानामामयानां च दर्शने ॥ ११

क्रियाणां [8]सुकरत्वाय कुर्यादाचूषणाय च ।

॥ नाडीयन्त्रप्रमाणम् ॥

तद्विस्तारपरीणाह[9]दैर्घ्यं स्रोतोऽनुरोधतः ॥ १२

॥ दशाङ्गुलनाडीयन्त्रम् ॥

दशाङ्गुलार्धनाहान्तःकण्ठशल्यावलोकिनी ।

[10]नली

॥ वारङ्गसङ्ग्रहणनाडी ॥

पञ्चमुखच्छिद्रा चतुःकर्णस्य संग्रहे ॥ १३

★[11]वारङ्गस्य द्विकर्णस्य [12]त्रिच्छिद्रा तत्प्रमाणतः ।

॥ नाडीयन्त्रकल्पनिर्देशः ॥

[13]वारङ्गशल्यसंस्थानानाहदैर्घ्यानुरोधतः ॥ १४

---

1 मूलेरुचकभूषणा 2 मांसानि * आहरणे प्रयुज्यत इति शेषः ।

3 द्वेधा दशाङ्गुले मध्ये 4 मत्स्येक 5 नाडी 6 नाडी

7 मायानां आयामानां 8 सुकरत्वाय 9 दैर्घ्य 10 सिकी

11 सारङ्गस्य ★ वारङ्गः शरादिवृन्तप्रवेशः शिखाकारः कीलक इत्यस्मत्पक्षः

12 त्रिसन्धा 13 पारङ्ग

नालीरेवंविधाश्चान्या द्रष्टुं [1]शल्यानि कारयेत् ।

॥ शल्यनिर्घातननाडी ॥

पद्मकर्णिकया मूर्ध्नि सदृशी द्वादशाङ्गुला ॥ १५

चतुर्थसुषिरा नाली [2]शल्यनिर्घातनी मता ।

॥ अर्शोयन्त्रम् ॥

अर्शसां [3]गोस्तनाकारं यन्त्रकं चतुरङ्गुलम् ॥ १६

नाहे पञ्चाङ्गुलं पुंसां प्रमदानां षडङ्गुलम् ।

द्विच्छिद्रं दर्शने व्याधे[4]रेकच्छिद्रं तु कर्मणि ॥ १७

मध्येऽस्य त्र्यङ्गुलं छिद्रमङ्गुष्ठोदरविस्तृतम् ।

अर्धाङ्गुलो[5]च्छ्रितोद्वृत्तकर्णिकं च तदूर्ध्वतः ॥ १८

॥ शमीयन्त्रम् ॥

शम्याख्यं [6]तादृगच्छिद्रं यन्त्रमर्शःप्रपीडने ।

॥ भगन्दरयन्त्रम् ॥

[7]सर्वथापनयेदोष्ठं छिद्रादूर्ध्वं [8]भगन्दरे ॥ १९

॥ घ्राणार्शोयन्त्रम् ॥

घ्राणार्बुदार्शसामेकच्छिद्रा नाड्यङ्गुलद्वया ।

प्रदेशिनीपरीणाहा स्याद् भगन्दरयन्त्रवत् ॥ २०

॥ अङ्गुलित्राणम् ॥

अङ्गुलित्राणकं दान्तं वार्क्षं वा चतुरङ्गुलम् ।

द्विच्छिद्रं गोस्तनाकारं [9]तद् वक्त्रविवृतौ सुखम् ॥ २१

॥ योनिव्रणेक्षणयन्त्रम् ॥

योनिव्रणेक्षणं मध्ये सुषिरं षोडशाङ्गुलम् ।

[10]मुद्रावद्धं चतुर्भित्तमम्भोज[11]मुकुलाननम् ॥ २२

---

1 सक्थानि 2 शल्यघातनी 3 ह्रोस्तनाराद् 4 रेवं छिद्रं
5 भितोद्वृत्तः कर्णिक वूर्ध्वतः 6 तादृशं छिद्रं 7 सर्वदा 8 भगंदरम्
9 तद्वृत्त विवृतं सुखम् 10 मुद्राभित्यचतुर्भित्य 11 मुकुला

चतुश्शलाक[1]माक्रान्तं मूले तद् विकसेन्मुखे ।

॥ व्रणवस्तियन्त्रे ॥

यन्त्रे नालीव्रणाभ्यङ्गक्षालनाय षडङ्गुले ॥ २३

वस्ति[2]यन्त्राकृती मूले मुखेऽङ्गुष्ठ[3]कलायखे ।

अग्रतोऽकर्णिके मूले निबद्धमृदुचर्मणी ॥ २४

॥ जलोदरयन्त्रम् ॥

द्विद्वारा नालिका पिञ्छानालिका वा [4]दकोदरे ।

॥ धूमादियन्त्रानुवादः ॥

धूमवस्त्यादियन्त्राणि निर्दिष्टानि यथायथम् ॥ २५

॥ शृङ्गयन्त्रम् ॥

त्र्यङ्गुलास्यं भवेच्छृङ्गं चूषणे षोडशाङ्गुलम् ।

अग्रे सिद्धार्थकच्छिद्रं सुनद्धं चूचुकाकृति ॥ २६

॥ अलाबुयन्त्रम् ॥

स्याद् द्वादशाङ्गुलोऽलाबुर्नाहे त्वष्टादशाङ्गुलः ।

चतुस्त्र्यङ्गुलवृत्तास्यो दीप्तोऽन्तः [5]श्लेष्मरक्तहृत् ॥ २७

॥ घटीयन्त्रम् ॥

[6]तद्वद् घटी हिता गुल्म[7]विलयोन्नमने च सा ।

॥ शलाकायन्त्राणि ॥

[8]शलाकाख्यानि यन्त्राणि नानाकर्माकृतीनि तु ॥ २८

यथायोग[9]प्रमाणानि

॥ एषणशलाके ॥

तेषामेषणकर्मणि ।

उभे गण्डूपदमुखे

॥ स्रोतश्शल्याहरणशलाके ॥

स्रोतोभ्यः शल्यहारिणी ॥ २९

1 माग्राङ्गमूलेन
2 न्त्रा शुषिर्मूले
3 कलायके
4 च कादरे
5 शेष
6 तद्वद्घटिकाख्या
7 लिकयो
8 शलाकाख्यानि
9 प्रहाणानि

मसूरदळवक्त्रे द्वे स्यातामष्टनवाङ्गुले ।

॥ व्यूहनशङ्कुयन्त्रे ॥

[1]शङ्कवोऽष्टावुभौ तेषां षोडशद्वादशाङ्गुलौ ॥ ३०

व्यूहनेऽहिफणावक्त्रौ

॥ चालनशङ्कू ॥

द्वौ दशद्वादशाङ्गुलौ ।

चालने [2]शरपुङ्खाभौ

॥ आहरणशङ्कू ॥

आहार्ये बडिशाकृती । ३१

॥ गर्भशङ्कुः ॥

नतोऽग्रे * शङ्कुना तुल्यो गर्भशङ्कुरिति स्मृतः ॥ ३२

[3]अष्टाङ्गुलायतस्तेन मूढगर्भं हरेत् स्त्रियाः ।

॥ अश्मर्याहरणयन्त्रम् ॥

अश्मर्याहरणे सर्पफणावद् वक्रमग्रतः ॥ ३३

॥ दन्तपातनयन्त्रम् ॥

शरपुङ्खमुखं दन्तपातनं चतुरङ्गुलम् ।

॥ परिमार्जनशलाकाः ॥

कार्पासविहितोष्णीषाः शलाकाः षट् प्रमार्जने ॥ ३४

॥ षण्णां विषयाः ॥

[4]पायावासन्नदूरार्थे द्वे दशद्वादशाङ्गुले ।

द्वे षट्सप्ताङ्गुले घ्राणे द्वे कर्णेऽष्टनवाङ्गुले ॥ ३५

॥ कर्णशोधनयन्त्रम् ॥

कर्णशोधनमश्वत्थपत्रप्रान्तं स्रुवाननम् ।

॥ क्षाराग्निशलाकाजाम्बवौष्ठानि ॥

[5]शलाकाजाम्बवोष्ठानां [6]क्षारेऽग्नौ च पृथक् त्रयम् ॥ ३६

---

1 शङ्कवङ्गुलौ 2 श पुङ्खाख्या * कङ्कः = मत्स्यविशेषः । 3 अष्टादशाङ्गुल
4 प्रायोवासे न दूरार्थे द्वे द्वादश दशाङ्गुले 5 शालूक 6 क्षाराग्ना

युञ्ज्यात् स्थूलाणुदीर्घाणां

॥ अन्त्रवृद्धिशलाका ॥

शलाकामन्त्र[1]वर्त्मनि ।

*मध्योर्ध्ववृत्तदण्डां च मूले चार्धेन्दुसंनिभाम् ॥ ३७

॥ नासार्शोदाहशलाका ॥

कोलास्थिदलतुल्यास्या नासार्शोऽर्बुद[2]दाहकृत् ।

॥ दर्वीशलाकाः ॥

[3]अष्टाङ्गुला निम्नमुखास्तिस्रः क्षारौषधक्रमे ॥ ३८

कनीनीमध्यमानामीनखमानसमैर्मुखैः ।

॥ मेढ्रशुद्ध्यादियन्त्रानुवादः ॥

स्वं स्वमुक्तानि यन्त्राणि मेढ्रशुद्ध्यञ्जनादिषु ॥ ३९

॥ अनुयन्त्राणि ॥

अनुयन्त्राण्ययस्कान्तरज्जुवस्त्राश्ममुद्गराः ।

कशान्त्रजिह्वावालाश्च [4]शाखानखमुखद्विजाः ॥ ४०

कालः पाकः करः पादो भयं हर्षश्च ; तत्क्रियाः ।

उपायवित् प्रविभजेदालोच्य निपुणं धिया ॥ ४१

॥ यन्त्रकर्माणि ॥

निर्घातनो[5]न्मथनपूरणमार्गशुद्धि-

संव्यूहनाहरणबन्धनपीडनानि ।

आचूषणोन्नमननामन[6]चालभङ्ग-

व्यावर्तनर्जुकरणानि च यन्त्रकर्म ॥ ४२

---

1 वर्धनी

* मध्यादूर्ध्वं वृत्तो दण्डो यस्यास्तामित्यर्थः

2 दाह

3 अपामार्ग

4 मुखसन्धि

5 न्मथन

6 नाल

॥ कङ्कमुखयन्त्रस्य प्राधान्यम् ॥

विवर्तते [1]साध्ववगाहते च
ग्राह्यं गृहीत्वोद्धरते च यस्मात् ।
[2]यन्त्रेष्वतः कङ्कमुखं प्रधानं
[3]स्थानेषु सर्वेष्वविकारि चैव ॥ ४३

इति [4]श्रीश्रीनिवासपण्डितविरचितचिकित्सातिलके
सूत्रस्थाने यन्त्रविधिर्नाम पञ्चत्रिंशोऽध्यायः ॥

---

1 स्वाद्गुव 2 यन्त्रं 3 धनेषु सर्वेष्टविकारि चत्र 4 श्रीमद्दयित

## ॥ अथ षट्त्रिंशोऽध्यायः ॥

॥ अथातः शस्त्रविधिमध्यायं व्याख्यास्यामः ॥

॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥

### ॥ शस्त्रसंख्या शस्त्रस्वरूपं च ॥

षड्विंशतिः सुकुर्मारैर्घटितानि यथाविधि ।
शस्त्राणि रोम[1]वाहीनी बाहुल्येनाङ्गुलानि षट् ॥ १
[2]सुरूपाणि सुधाराणि सुग्रहाणि च कारयेत् ।
अकरालानि सुध्मातसुतीक्ष्णावर्तितेऽयसि ॥ २
समाहितमुखाग्राणि [3]नीलाम्भोजच्छवीनि च ।
नामानुगतरूपाणि सदा सन्निहितानि च ॥ ३
स्वोन्मानार्धचतुर्थांश[4]फलान्येकैकशोऽपि च ।
प्रायो द्वित्राणि युञ्जीत तानि स्थानविशेषतः ॥ ४

### ॥ मण्डलाग्रलक्षणं उपयोगश्च ॥

मण्डलाग्रं फले तेषां [5]तर्जन्यन्तर्नखाकृति ।
लेखने छेदने [6]योज्यं पोथकीशुण्डिकादिषु ॥ ५

### ॥ वृद्धिपत्रम् ॥

वृद्धिपत्रं क्षुराकारं छेदभेदनपाटने ।
ऋज्वग्रमुन्नते [7]शोफे गम्भीरे [8]च तदन्यथा ॥ ६
नताग्रं पृष्ठतो दीर्घह्रस्ववक्त्रं [9]यथाशयम् ।

### ॥ उत्पलमध्यर्धधारं च ॥

उत्पलाध्यर्धधाराख्ये भेदनच्छेदने तथा ॥ ७

---

1 वाहानि   2 सुरूपाणि सुधा ...रणि   3 कांभोज छवीनि च ।
4 फला   5 तर्जन्यं तस्सा   6 योज्ये पोत्थकिंशुरिका
7 चोसे   8 ते   9 यथाक्रमम्

॥ सर्पवक्त्रम् ॥

सर्पास्यं घ्राणकर्णार्शश्छेदनेऽर्धाङ्गुलं [1]फले

॥ एषणी ॥

गतेरन्वेषणी श्लक्ष्णा गण्डूपदमुखैषणी ॥ ८

॥ भेदनैषणी ॥

भेदनार्थेऽपरा [2]सूचीमुखा मूलनिविष्टखा ।

॥ वेतसशरारीमुखत्रिकूर्चकानि ॥

वेतसं व्यधने ; स्राव्ये शरार्यास्यत्रिकूर्चके ॥ ९

॥ कुशाटामुखे ॥

कुशाटावदने स्राव्ये व्यङ्गुलं स्यात् तयोः फलम् ।

॥ अन्तर्मुखम् ॥

तद्वदन्तर्मुखं तस्य फलमध्यर्धमङ्गुलम् ॥ १०

अर्धचन्द्राननं चैतत्

॥ व्रीहिवक्त्रम् ॥

तथाध्यर्धाङ्गुलं फले ।

व्रीहिवक्त्रं प्रयोज्यं च तच्छिरोदरयोर्व्यधे ॥ ११

॥ कुठारी ॥

[3]पृथुः कुठारी गोदन्तसदृशार्धाङ्गुलानना ।

[4]तयोर्ध्वदण्डया विध्येदुपर्यस्थ्नां स्थितां सिराम् ॥ १२

॥ शलाकाशस्त्रम् ॥

ताम्री शलाका द्विमुखा [5]मुखे कुरवकाकृतिः ।

लिङ्गनाशं तया विध्येत्

॥ अङ्गुलिशस्त्रम् ॥

कुर्यादङ्गुलिशस्त्रकम् ॥ १३

मुद्रिकानिर्गतमुखं फले त्वर्धाङ्गुलायतम् ।

योगतो वृद्धिपत्रेण मण्डलाग्रेण वा समम् ॥ १४

---

1 फले  2 सूचिते याध्यर्धाङ्गुलं फले  3 पृथक्कुठारि
4 तयार्ध  5 मुखेकुरवका

[1]तत्प्रदेशिन्यग्रपर्वप्रमाणार्पितमुद्रिकम् ।
सूत्र[2]बद्धं गलस्रोतोरोगच्छेदनभेदने ॥ १५

॥ बडिशः ॥

ग्रहणे शुण्डिकामदिर्बडिशस्तु नतानन: ।

॥ करपत्रम् ॥

छेदेऽस्थ्नां करपत्रं [3]तु खरधारं दशाङ्गुलम् ॥ १६
विस्तारे द्व्यङ्गुलं सूक्ष्मदन्तं सुत्सरुबन्धनम् ।

॥ कर्तरी ॥

स्नायुसूत्रकचच्छेदे कर्तरी कर्तरीनिभा ॥ १७

॥ नखशस्त्रम् ॥

[4]वक्रर्जुधारं द्विमुखं नखशस्त्रं नवाङ्गुलम् ।
सूक्ष्मशल्याहृतिच्छेदभेदवच्छनलेखने* ॥ १८

॥ दन्तलेखनशस्त्रम् ॥

एकधारं चतुष्कोणं [5]प्रबद्धाकृति चैकत: ।
दन्तलेखनकं तेन [6]शोधयेद् दन्तशर्कराम् ॥ १९

॥ सूच्यः ॥

वृत्ता ★गूढदृढा: [7]पाशे तिस्र: सूच्य: प्रसेवने ।

॥ सूचीभेदानां प्रत्येकं विषयाः ॥

मांसलानां प्रदेशानां त्र्यस्रास्त्र्यङ्गुलमायता: ॥ २०
अल्पमांसास्थि[8]सन्धिस्थव्रणानां द्व्यङ्गुलायता ।
व्रीहिवक्त्रा धनुर्वक्रा पक्वामाशयमर्मसु ॥ २१

---

1 तत्प्रदेशे 2 बन्धं 3 मकरधारं 4 ऋजु
* वच्छनलेखनं = प्रच्छन्नलेखनम् । रोगी यथा लेखनं समवस्यमानं न जानीयात् तथा लेखनमित्यर्थः । ' प्रच्छन्न लेखने ' इत्यपि क्वचित्पाठः ।
5 प्रवृद्धाकृतिश्चैकतः 6 शोधने ★ पाशे छिन्नस्थाने गूढाः, तथा दृढाश्चेत्यर्थः
7 पार्श्वे 8 सन्धिव्रण

सा सार्धद्व्यङ्गुला

॥ कूर्चशस्त्रम् ॥

सर्ववृत्तास्ताश्चतुरङ्गुलाः ।

कूर्चो वृत्तैकपीठस्थाः सप्ताष्टौ वा सुबन्धनाः ॥ २२

[1]स योज्यो नीलिकाव्यङ्गकेशशातनकुट्टने ।

॥ खजशस्त्रम् ॥

अर्धाङ्गुलमुखैर्वृत्तैरष्टाभिः कण्टकैः खनः ॥ २३

पाणिभ्यां [2]मथ्यमानेन घ्राणात् तेन हरेदसृक् ।

॥ कर्णव्यधशस्त्रम् ॥

व्यधने कर्णपालीनां यूथिकामुकुलाननम् ॥ २४

॥ आराशस्त्रम् ॥

आरार्धाङ्गुलवृत्तास्या [3]तत्प्रवेशा तथोर्ध्वतः ।

चतुरस्रा तया विध्येच्छोफं पक्वामसंशये ॥ २५

कर्णपालीं च बहुलां

॥ बहुलायां सूचीविधिः ॥

तस्या [4]एव च शस्यते ।

सूची त्रिभागसुषिरा त्र्यङ्गुला कर्णवेधिनी ॥ २६

॥ अनुशस्त्राणि ॥

[5]जलौकःक्षारदहनकाचोपलनखादयः ।

अलौहान्यनुशस्त्राणि तान्येवं च विकल्पयेत् ॥ २७

अपराननुयन्त्रादीनुपयोगं च यौगिकम् ।

॥ शस्त्रकर्माणि ॥

उत्पाट्यापाट्य[6]सीव्यैष्यलेख्यप्रच्छानकुट्टनम् ॥ २८

छेद्यभेद्यव्यधोन्मन्थग्राहदाहाश्च तत्क्रियाः ।

॥ छेदनादौ शस्त्रग्रहणविधिः ॥

छेदभेदनलेख्यार्थं शस्त्रं [7]वृन्तफलान्तरे ॥ २९

---

1 नियोज्यानि विकाश्य 2 पीड्यमानेन 3 तत्प्रदेशावक 4 वचनस्यते
5 आकाकक्षारदहरकोचोपकमचादय: 6 सीव्यैष्य रेख्यप्रच्छन 7 वृत्त

तर्जनीमध्यमाङ्गुष्ठैर्गृह्णीयात् सुसमाहितः ।

॥ विस्रावणशस्त्रग्रहणविधिः ॥

विस्रावणानि वृन्ताग्रे तर्जन्याङ्गुष्ठकेन च ॥ ३०

॥ व्रीहिमुखग्रहणविधिः ॥

तले प्रच्छन्नवृन्ताग्रं ग्राह्यं व्रीहिमुखं मुखे ।

॥ आहार्यादीनां ग्रहणविधिः ॥

मूलेष्वाहरणार्थानि क्रियासौकर्यतोऽपरम् ॥ ३१

॥ शस्त्रकोशः ॥

स्यान्नवाङ्गुलविस्तारः सुघनो द्वादशाङ्गुलः ।

क्षौमपत्रोर्णकौशेयदुकूलमृदुचर्मजः ॥ ३२

विन्य[1]स्तपाशः सुस्यूतः सान्तरोर्णास्थशस्त्रकः ।

शलाकापिहितास्यश्च शस्त्रकोशः सुसंचयः ॥ ३३

॥ इति शस्त्रविधिः ॥

* * *

## ॥ अथ जलौकावचारणप्रकरणम् ॥

॥ जलौकसां विषयाः ॥

जलौकसस्तु सुखिनां रक्तस्रावाय योजयेत् ।

॥ निर्विषजलौकोलक्षणम् ॥

निर्विषाः शैवलश्यामा वृत्ता [2]नीलोर्ध्वराजयः ॥ १

कषाय[3]पृष्ठास्तन्वङ्ग्यः किञ्चित्पीतोदराश्च याः ।

॥ निर्विषास्वपि त्याज्याः ॥

[4]ता अप्यसम्यग्वमनात् प्रततं च निपातनात् ॥ २

सीदन्ति सलिलं प्राप्य रक्तमत्ता इति त्यजेत् ।

॥ जलौकसामवचारणविधिः ॥

अथेतरा निशाकल्कसंयुक्तेऽम्भसि संप्लुताः ॥ ३

---

1 स्युतांतरोर्णस्थ 2 नीलोर्ध्व 3 पृष्ठा 4 अतार्प

* [1]अवन्तिसोमे तक्रे वा पुनश्चाश्वसिता [2]जले
रमयेद् घृतमृत्स्तन्यरक्तशस्त्रनिपातनैः ॥ ४

॥ पानकाले तासामुपचारः ॥

पिबन्तीरुन्नतस्कन्धाश्छादयेन्मृदुवाससा ।

॥ जलौकसां दुष्टास्रपानस्वभावः ॥

[3]संपृक्ताद् दुष्टशुद्धास्राज्जलौका दुष्टशोणितम् ॥ ५
[4]आदत्ते प्रथमं हंसः क्षीरं क्षीरोदकादिव ।

॥ जलौकसां मोक्षणकालः ॥

दंशस्य तोदे कण्डूां वा मोक्षयेत्

॥ मोक्षितानां वमनविधिः ॥

वामयेच्च ताः ।
पटुतैलाक्तवदनाः श्लक्ष्णकण्डनरूक्षिताः ॥ ६
रक्षन् रक्तमदाद् भूयः सप्ताहं ता न पातयेत् ।

॥ सम्यग्वान्तलक्षणम् ॥

पूर्ववत् पटुता दार्ढ्यं सम्यग्वान्ते जलौकसाम् ॥ ७

॥ अतिवान्तदुर्वान्तलक्षणम् ॥

क्लमोऽतियोगान्मृत्युर्वा ; दुर्वान्ते स्तब्धता [5]मदः ।

॥ जलौकसां पालनविधिः ॥

अन्यत्रान्यत्र ताः स्थाप्या घटे ×मृत्साम्बुगर्भिणि ॥ ८
लालादि[6]कोथनाशार्थं सविषाः स्युस्तदन्वयात् ।

॥ अशुद्धदंशस्रावणविधिः ॥

अशुद्धौ स्रावयेद् दंशाद्धरिद्रागुल्माक्षिकैः ॥ ९

---

1 अवन्ति सोमे * अवन्तिसोमे=काञ्जिके    2 जले
3 संपृक्ता दुष्टशुद्धास्रो    4 आधत्ते
5 मत × मृत्स्ना=प्रशस्ता मृत्    6 दोष

॥ स्रावितव्रणोपचारः ॥

शतधौताज्य[1]पिचवस्ततो लेपाश्च शीतलाः ।

॥ स्रावस्य प्रयोजनम् ॥

दुष्टरक्तापगमनात् सद्यो रोगरुजां शमः ॥ १०

॥ पुनःस्रावविधिः ॥

अशुद्धं चलितं स्थानात् स्थितं रक्तं व्रणाश्रये ।
व्यम्लीभ[2]वेत् पर्युषितं तस्मात् तत् स्रावयेत् पुनः ॥ ११

॥ इति जलौकःप्रकरणम् ॥

* * *

॥ अथालाब्वादिप्रकरणम् ॥

॥ अलाबुघटयोरविषयः विषयश्च ॥

युञ्ज्यान्नालाबुघटिका रक्ते पित्तेन दूषिते ।
तासामनलसंयोगाद् ; युञ्ज्यात् तु कफवायुना ॥ १

॥ कफदुष्टे शृङ्गप्रतिषेधः ॥

कफेन दुष्टं रुधिरं न शृङ्गेण विनिर्हरेत् ।
स्कन्नत्वात्

॥ वातपित्तदुष्टे शृङ्गविधिः ॥

वातपित्तभ्यां दुष्टं शृङ्गेण निर्हरेत् ॥ २

॥ प्रच्छानविधिः ॥

गात्रं बद्ध्वोपरि दृढं रज्ज्वा [3]पट्टेन वाससा ।
स्नायुसन्ध्यस्थिमर्माणि त्यज[4]न् प्रच्छानमाचरेत् ॥ ३
अधोदेशप्रविसृतैः [5]पदैरुपरिगामिभिः ।
[6]न गाढघनतिर्यग्भिर्न पदे पदमाचरेत् ॥ ४

1 विच्छेदः 2 चेत्पर्युषितं 3 पवन 4 मज्जान
5 वृथैव परि 6 निगाढघन

॥ प्रच्छानादीनां विषयभेदाः ॥

[1]प्रच्छानेनैकदेशस्थं ग्रथितं जलजन्मभिः ।
हरेच्छृङ्गादिभिः सुप्तमसृग् व्यापि सिराव्यधैः ॥ ५

॥ प्रकारान्तरेण पुनर्विषयभेदाः ॥

[2]प्रच्छानं पिण्डिते वा स्यादवगाढे जलौकसः ।
त्वक्स्थेऽलाबुघटीशृङ्गं सिरैव व्यापकेऽसृजि ॥ ६

॥ दोषभेदेन शृङ्गादिविधिः ॥

वातादि[3]धामजं शृङ्गजलूकालाबुभिः क्रमात् ।

॥ शीतोपचारजव्यापच्चिकित्सा ॥

सुप्तासृजः प्रदेहाद्यैः शीतैः स्याद् वायुकोपतः ॥ ७
सतोदकण्डूः [4]शोफस्तं सर्पिषोष्णेन सेचयेत् ॥ ८

॥ इति श्रीश्रीनिवासपण्डितविरचितचिकित्सातिलके सूत्रस्थाने
शस्त्रविधिर्नाम षट्त्रिंशोऽध्यायः ॥

---

1 प्रच्छने 2 प्रच्छनं 3 धातुजं 4 शोफकं

# ॥ अथ सप्तत्रिंशोऽध्यायः ॥

॥ अथातः सिराविधिमध्यायं व्याख्यास्यामः ॥

॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥

॥ शुद्धरक्तलक्षणम् ॥

मधुरं लवणं किञ्चिदशीतोष्ण[1]मसंहतम् ।
पद्मेन्द्रगोपहेमाविशशलोहितलोहितम् ॥ १
लोहितं प्रभवं शुद्धं तनो[2]स्तेनैव च स्थितिः ।

॥ रक्तदुष्टिकारणानि ॥

तत् पित्तश्लेष्मलैः प्रायो दूष्यते

॥ दुष्टरक्तजा विकाराः ॥

कुरुते ततः ॥ २
विसर्पविद्रधिप्लीहगुल्माग्निसदन[3]ज्वरान् ।
मुखनेत्रशिरोरोगमदतृड्लवणास्यताः ॥ ३
कुष्ठवातास्रपित्तास्रकट्वम्लोद्गिरणभ्रमान् ।
शीतोष्णस्निग्धरूक्षाद्यैरुपक्रान्ताश्च ये गदाः ॥ ४
सम्यक्साध्या न सिध्यन्ति ते च रक्तप्रकोपजाः ।

॥ तत्र सिराव्यधविधिः ॥

तेषु स्रावयितुं रक्तमुद्रिक्तं व्यधयेत् सिराम् ॥ ५

॥ सिराव्यधानर्हाः ॥

न तूनषोडशातीतसप्तत्यब्द [4]स्नुतास्रजाम् ।
अस्निग्धास्वेदितात्यर्थस्वेदितानिलरोगिणाम् ॥ ६
गर्भिणीसूतिकाजीर्णपित्तास्रश्वासकासिनाम् ।
अतीसारोदरच्छर्दिपाण्डुसर्वाङ्गशोफिनाम् ॥ ७
स्नेहपीते प्रयुक्तेषु [5]तथा पञ्चसु कर्मसु ।
नायन्त्रितां सिरां विध्येन्न तिर्यङ् नाप्य[6]नुत्थिताम् ॥ ८

---

1 संहतम्   2 स्तैरेव   3 भ्रमेत्
4 स्वरा   5 सभ्या   6 सहिताम्

नातिशीतोष्णवाताभ्रे[1]ष्वन्यत्रात्ययिकाद् गदात् ।

॥ शिरोनेत्ररोगेषु सिराविधिः ॥

शिरोनेत्रविकारेषु ललाटीं मोक्षयेत् सिराम् ॥ ९

अपाङ्ग्यामुपनास्यां वा

॥ कर्णनासापीनसमुखरोगेषु सिराः ॥

कर्णरोगेषु कर्णजाम् ।

नासारोगेषु नासाग्रे स्थितां ; नासाललाटयोः ॥ १०

पीनसे ; मुखरोगेषु जिह्वोष्ठहनुतालुगाः ।

॥ जत्रूर्ध्वग्रन्थिषु सिराः ॥

जत्रूर्ध्वग्रन्थिषु ग्रीवाकर्णशङ्खशिरःश्रिताः ॥ ११

॥ उन्मादापस्मारयोः सिराः ॥

[2]उरोऽपाङ्गललाटस्था उन्मादे[3]ऽपस्मृतौ पुनः ।

हनुसन्धौ समस्ते वा सिरां भ्रूमध्यगामिनीम् ॥ १२

॥ विद्रधिपार्श्वशूलयोः सिराः ॥

विद्रधौ पार्श्वशूले च पार्श्ववक्षस्स्तनान्तरे ।

॥ तृतीयकचतुर्थकयोः सिरे ॥

तृतीयकेंऽसयोर्मध्ये स्कन्धस्याधश्चतुर्थके ॥ १३

॥ प्रवाहिकायां सिरा ॥

प्रवाहिकायां शूलिन्यां श्रोणितो द्व्यङ्गुले स्थिताम् ।

॥ शुक्रमेढ्ररोगे गण्डयोश्च सिरे ॥

शुक्रमेढ्रामये [4]मेढ्रे ; ऊरुगां गलगण्डयोः ★ ॥ १४

॥ गृध्रस्यां सिरा ॥

गृध्रस्यां जानुनोऽधस्तादूर्ध्वं वा चतुरङ्गुले ।

॥ अपच्यादिषु सिरा ॥

इन्द्रवस्तेरधोऽपच्यां द्व्यङ्गुले ; चतुरङ्गुले ॥ १५

---

1 ष्वनुदात्ययिकाद् 2 अकोपाङ्ग 3 प्रसृतां 4 मेढ्रोरूणां

★ गलगण्डयोः=गलगण्डे गण्डमालायां च

ऊर्ध्वं गुल्फस्य सक्थ्यर्त्तौ तथा क्रोष्टुकशीर्षके ।

॥ पाददाहादौ सिरा ॥

पाद[1]दाहे खुडे हर्षे [2]विपाद्यां वातकण्टके ॥ १६

चिप्पे च द्व्यङ्गुले विध्येदुपरि क्षिप्रमर्मणः ।

गृध्रस्यामिव विश्वाच्यां

॥ निर्दिष्टसिरानुपलम्भे कर्तव्यम् ॥

यथोक्ताना[3]मदर्शने ॥ १७

मर्महीने यथासन्नदेशेऽन्यां व्यधयेत् सिराम् ।

॥ सिराव्यधयन्त्रणविधिः ॥

[4]अथ स्निग्धतनुः सज्जसर्वोपकरणो बली ॥ १८

कृतस्वस्त्ययनः स्निग्धरसान्नप्रतिभोजनः ।

अग्नि[5]तापातपस्विन्नो जानूच्चासनसंस्थितः ॥ १९

मृदुपट्टात्तकेशान्तो जानुस्थापितकूर्परः ।

मुष्टिभ्यां वस्त्रगर्भाभ्यां मन्ये गाढं निपीडयेत् ॥ २०

दन्तप्रपीडनो[6]त्कासगण्डाध्मानानि ना चरेत् ।

पृष्ठतो यन्त्रयेच्चैनं वस्त्रमावेष्टयेन्नरः ॥ २१

कन्धरायां परिक्षेप्य न्यस्यान्तर्वामतर्जनीम् ।

[7]एषोऽन्तर्मुखवर्ज्यानां सिराणां यन्त्रणे विधिः ॥ २२

॥ सिरोत्पातनविधिः ॥

ततो मध्यमयाङ्गुल्या [8]वैद्योऽङ्गुष्ठविमुक्तया ।

ताडयेत्

॥ सिरामोक्षविधिः ॥

[9]उत्थितां ज्ञात्वा स्पर्शाद् वाङ्गुष्ठपीडनैः ॥ २३

---

1 पादेऽखुरे  2 क्षिपक्यां  3 मप्रदर्शने
4 सुख्य  5 वातातप  6 श्वासकम्पा
7 एषोन्तमर्वेनां  8 वैद्यो  9 स्थितां

कुठार्या लक्षयेन्मध्ये वामहस्ते गृहीतया ।
फलोद्देशे सुनिष्कम्पं शिरां तद्वच्च मोक्षयेत् ॥ २४
ताडयन् पीडयंश्चैनां

॥ उपनासिकाव्यधविधिः ॥

विध्येद् व्रीहिमुखेन तु ।
अङ्गुष्ठेनोन्नमय्याग्रनासिकामुपनासिकां । २५

॥ जिह्वासिराव्यधविधिः ॥

अभ्युन्नतविदष्टाग्रजिह्वस्याधस्तदाश्रयाम् ।

॥ ग्रीवासिराव्यधविधिः ॥

यन्त्रयेत् स्तनयोरूर्ध्वं ग्रीवाश्रितसिरा[1]व्यधे ॥ २६

॥ भुजसिराव्यधविधिः ॥

पाषाणगर्भहस्तस्य जानुस्थे प्रसृते भुजे ।
कुक्षेरारभ्य मृदिते विध्येद् बद्धोर्ध्वपट्टके ॥ २७

॥ हस्तसिराव्यधविधिः ॥

विध्येद्धस्तशिरां बाहावनाकुञ्चितकूर्परे ।
बद्ध्वा सुखोपविष्टस्य मुष्टिमङ्गुष्ठगर्भिणीम् ॥ २८
ऊर्ध्वं वेध्यप्रदेशाच्च पट्टकं चतुरङ्गुले ।

॥ पार्श्वसिराव्यधविधिः ॥

[2]विध्येदालम्बमानस्य बाहुभ्यां पार्श्वयोः सिराम् ॥ २९

॥ मेहनजङ्घासिराव्यधविधिः ॥

[3]प्रहृष्टे मेहने; जङ्घासिरां जानुन्यकुञ्चिते ।

॥ पादसिराव्यधविधिः ॥

पादे तु सुस्थितेऽधस्ताज्जानुसन्धेर्निपीडिते ॥ ३०

---

1 व्यधां    2 बध्वाधो    3 भसिरां जानेन्यकुञ्चिते

गाढं कराभ्यामागुल्फं [1]चरणे तस्य चोपरि ।
द्वितीये कुञ्चिते किञ्चि[2]दारूढे हस्तवत् ततः ॥ ३१
बद्ध्वा विध्येत् सिराम्

॥ अनुक्तेषु क्रमनिर्देशः ॥

इत्थमनुक्तेष्वपि कल्पयेत् ।
तेषु तेषु प्रदेशेषु तत्तद् यन्त्रमुपायवित् ॥ ३२

॥ स्थानभेदेन शस्त्रविधिः ॥

मांसले निक्षिपेद् देशे व्रीह्यास्यं व्रीहिमात्रकम् ।
यवार्धमस्थ्नामुपरि सिरां विध्येत् कुठारया ॥ ३३

॥ सम्यग्व्यधलक्षणम् ॥

सम्यग्विद्धे [3]स्रवेद् धारा यन्त्रे मुक्ते तु न स्रवेत् ।

॥ अल्पदुर्विद्धलक्षणम् ॥

अल्पकालं वहत्यल्पं ; दुर्विद्धा तैलचूर्णनैः * ॥ ३४

॥ अतिविद्धलक्षणम् ॥

[4]सशब्दमतिविद्धे तु स्रवेद् दुःखं च धार्यते ।

॥ रक्ताप्रवृत्तिकारणानि ॥

भीमूर्च्छायन्त्रशैथिल्यकुण्ठशस्त्रातितृप्तयः ॥ ३५
क्षामत्वं वेगिताऽस्वेदो रक्तस्याप्रवृत्तिहेतवः ।

॥ सम्यक्स्रावणौषधानि ॥

असम्यगस्रे स्रवति वेल्लव्योषनिशानतैः ॥ ३६
सागारधूमलवणतैलैर्दिह्यात् सिरामुखम् ।
सम्यक् प्रवृत्ते कोष्णेन तैलेन लवणेन च ॥ ३७

॥ सम्यक् स्रावे दुष्टशुद्धास्रयोः स्वभावः ॥

अग्रे [5]स्रवति दुष्टास्रं कुसुम्भादिव पीतिका ।
सम्यक् स्रुत्वा स्वयं तिष्ठेच्छुद्धं तदिति नाहरेत् ॥ ३८

---

1 .... 2 हमाचो 3 पुरे * तैलचूर्णनैः=तैलकल्कलवणव्योषतगरादिचूर्णैः ।
4 गच्छ 5 स्रवति विस्राव

॥ आवस्थिकमूर्च्छायां कर्तव्यम् ॥

यन्त्रं विमुच्य मूर्च्छायां वीजिते व्यजनैः पुनः ।
स्रावयेन्मूर्च्छति [1]पुनस्त्वपरेद्युस्त्र्यहेऽपि वा ॥ ३९

॥ वातदुष्टरक्तलक्षणम् ॥

वाताच्छ्यावारुणं रूक्षं वेग[2]स्राव्यच्छफेनिलम् ।

॥ पित्तदुष्टरक्तलक्षणम् ॥

पित्तात् पीतासितं विस्रमस्कन्द्युष्णं सचन्द्रकम् ॥ ४०

॥ कफदुष्टरक्तलक्षणम् ॥

कफात् स्निग्धमसृक् पाण्डु तन्तुमत् पिच्छिलं घनम् ।

॥ संसर्गसन्निपातदुष्टलक्षणम् ॥

संसृष्टलिङ्गं संसर्गात् त्रिदोषान्मलिनाविलम् ॥ ४१

॥ प्रस्थाधिकस्रावप्रतिषेधः ॥

अशुद्धं बलिनो[3]ऽप्यस्रं न प्रस्थात् स्रावयेत् परं* ।
अतिस्रुतौ हि मृत्युः स्याद् दारुणा वा चलामयाः ॥ ४२

॥ रक्तातिस्रुतौ उपक्रमः ॥

तत्राभ्यङ्गरसक्षीररक्तपानानि भेषजम् ।

॥ रक्तस्रावस्य पश्चात्कर्म ॥

स्रुते रक्ते शनैर्य[4]न्त्रमपनीय हिमाम्बुना ॥ ४३
प्रक्षाल्य [5]तैलप्लोताक्तं बन्धनीयं सिरामुखम् ।

॥ अशुद्धस्य पुनःस्रावकालः ॥

अशुद्धं स्रावयेद् भूयः सायमह्न्यपरेऽपि वा ॥ ४४
स्नेहोपस्कृतदेहस्य पक्षाद् वा भृशदूषितम् ।

---

1 पुनस्त्व गरे(णत्तु घृपयुत) स्रापिवा 2 स्रावश्च 3 बलस

* प्रस्थोऽत्र सार्धत्रयोदशपलः "वमने च विरेके च तथा शोणितमोक्षणे । सार्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः" इति स्मरणात् ।

4 न्त्रमुपनीय 5 प्रोताक्तं

॥ अतिस्रुतिप्रतिषेधः ॥

किञ्चिच्छेषे च दुष्टास्रे नैव रोगोऽतिवर्तते ॥ ४५

सशेषमप्यतो धार्यं न चातिस्रुतिमाचरेत् ।

॥ शिष्टस्य शृङ्गादिविधिः ॥

हरेच्छृङ्गादिभिः शेषं

॥ प्रसादनविधिः ॥

प्रसादमथ वा नयेत् ॥ ४६

शीतोपचारपित्तास्रक्रियाशुद्धिविशोषणैः ।

दुष्टरक्तमनुद्रिक्तमेवमेव च साधयेत् ॥ ४७

॥ अतिस्रावे स्तम्भनविधिः ॥

रक्ते त्वतिष्ठति क्षिप्रं स्तम्भनीमाचरेत् क्रियाम् ।

लोध्रप्रियङ्गुपत्तङ्गमाषयष्ट्याह्वगैरिकैः ॥ ४८

मृत्कपालाञ्जन[1]क्षौममषीक्षीरित्वगङ्कुरैः ।

विचूर्णयेद् व्रणमुखं * पद्मकादिहिमं पिबेत् ॥ ४९

[2]तामेव वा सिरां विध्येद् व्यधात् तस्मादनन्तरम् ।

सिरामुखं वा त्वरितं दहेत् तप्तशलाकया ।

॥ परिहारकालः ॥

उन्मार्गगा यन्त्रनिपीडनेन

स्वस्थानमायान्ति पुनर्न यावत् ॥ ५०

दोषाः प्रदुष्टा रुधिरं प्रविष्टा-

स्तावद्धिताहारविहारभाक् स्यात् ॥ ५१

॥ अन्नपानविधिः ॥

नात्युष्णशीतं लघु दीपनीयं

रक्तेऽपनीते हितमन्नपानम् ॥

---

1 क्षौद्र

* पद्मकादिहिमं=पद्मकादिसिद्धं शीतकषायं पिबेदित्यर्थः। पद्मकादिश्च "पद्मक पुण्ड्रौ वृद्धितुगर्ध्यः शृङ्ग्यमृता दश जीवनसंज्ञाः। स्तन्यकरा घ्नन्तीरणपित्तं प्रीणनजीवनबृंहणवृष्याः" इत्युक्तः॥ 2 यथा तस्मादनन्तरं

[1]तदा शरीरं ह्यनवस्थितास्र-
गग्निर्विशेषादतिरक्षितव्यः ॥ ५२

॥ शुद्धरक्तस्य पुरुषस्य लक्षणम् ॥

प्रसन्नवर्णेन्द्रियमिन्द्रियार्था-
निच्छन्तमव्याहतपक्तृवेगम् ।
सुखान्वितं [2]पुष्टिबलोपपन्नं
विशुद्धरक्तं पुरुषं वदन्ति ॥ ५३

॥ इति श्रीश्रीनिवासपण्डितविरचितचिकित्सातिलके सूत्रस्थाने सिराविधिर्नाम सप्तत्रिंशोऽध्यायः ॥

---

1 यथा 2 वृद्धि

## ॥ अथाष्टात्रिंशोऽध्यायः ॥

॥ अथातः शल्याहरणविधिमध्यायं व्याख्यास्यामः ॥

॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥

॥ शल्यगतयः ॥

वक्रर्जुतिर्यगूर्ध्वाधः शल्यानां पञ्चधा गतिः ।

॥ सशल्यव्रणलक्षणम् ॥

श्यामं शोफ[1]रुजावन्तं स्रवन्तं शोणितं मुहुः ॥ १

अभ्युद्गतं बुद्बुदवत् पिडकोपचितं व्रणम् ।

मृदुमांसं च जानीयादन्तःशल्यं समासतः ॥ २

॥ त्वक्स्थशल्यलक्षणम् ॥

विशेषात् त्वग्गते शल्ये विवर्णः कठिनायतः ।

[2]शोफो भवति

॥ मांसस्थशल्यलक्षणम् ॥

[3]मांसस्थे चोषः [4]शोफो विवर्धते ॥ ३

पीडनाक्षमता पाकः शल्यमार्गो न रोहति ।

॥ पेशीस्थशल्यलक्षणम् ॥

[5]पेश्यन्तरगते मांसप्राप्तवच्छ्वयथोर्विना ॥ ४

॥ स्नायुस्थशल्यलक्षणम् ॥

आक्षेपः स्नायुजालस्य संरम्भस्तम्भवेदनाः ।

स्नायुगे दुर्हरं चैतत्

॥ सिरास्रोतःस्थशल्यलक्षणम् ॥

सिराध्मानं सिराश्रिते ॥ ५

स्वकर्मगुणहानिः स्यात् स्रोतसां स्रोतसि स्थिते ।

॥ धमनीस्थशल्यलक्षणम् ॥

धमनीस्थेऽनिलो रक्तं फेनयुक्तमुदीरयन् ॥ ६

---

1 मज्जानवन्तं 2 शोषो 3 मांसगे

4 शोफो विवर्धने 5 पेश्यन्तरगतै

निर्याति शब्दवान् स्याच्च ह्लासः साङ्गवेदनः ।

॥ अस्थिसन्धिस्थशल्यलक्षणम् ॥

संघर्षो बलवानस्थिसंधिप्राप्तेऽस्थिपूर्णता ॥ ७

नैकरूपा [1]रुजोऽस्थिस्थे शोफस्तद्वच्च सन्धिगे ।

चेष्टानिवृत्तिश्च भवेत्

॥ कोष्ठस्थशल्यलक्षणम् ॥

आटोपः कोष्ठसंश्रिते ॥ ८

आनाहोऽन्नशकृन्मूत्रदर्शनं च व्रणानने ।

॥ मर्मस्थशल्यलक्षणम् ॥

विद्यान्मर्मगतं शल्यं मर्मविद्धोपलक्षणैः ॥ ९

॥ परिस्रावतो लक्षणनिर्देशः ॥

* यथास्वं च परिस्रावैस्त्वगादिषु विभावयेत् ।

॥ अन्तःशल्यस्यापि रोहणं भूयो बाधा च ॥

[2]रुह्यते शुद्धदेहानामनुलोमस्थितं हि तत् ॥ १०

दोषकोपोपघातादिक्षोभाद् भूयोऽपि बाधते ।

॥ त्वङ्नष्टशल्यविज्ञानम् ॥

त्वङ्नष्टे यत्र तत्र स्युरभ्यङ्गस्वेदमर्दनैः ॥ ११

रागरुग्दाहसंरम्भा यत्र [3]चाज्यं विलीयते ।

आशु शुष्यति लेपो वा तत् स्थानं शल्यव[4]द् वदेत् ॥ १२

॥ मांसादिनष्टशल्यविज्ञानम् ॥

मांसप्रणष्टं संशुद्ध्या कर्शनाच्छ्लथतां गतम् ।

क्षोभाद् रथादिभिः शल्यं लक्षयेत् ; तद्वदेव च ॥ १३

---

1 रुजोस्निग्धो

* त्वग्गते सलिलप्रकाशो विस्रः पीतावभासः; मांसगे सर्पिःप्रकाशो बहलः पिच्छिलश्च; सिरास्थे तनुर्विच्छिन्नः पिच्छिलः श्यावश्च; स्नायुगे स्निग्धो घनः सिङ्घाणप्रतिमश्चेति यथास्वं परिस्रावलक्षणम् ।

2 दुह्यते 3 राज्यं 4 द्रवेत्

पेश्यस्थिसन्धिकोष्ठेषु

॥ अस्थिनष्टशल्यविज्ञानम् ॥

नष्टमस्थि तु लक्षयेत् ।

अस्थ्नामभ्यञ्जनस्वेदबाधपीडनमर्दनैः ॥ १४

॥ सन्धिनष्टशल्यविज्ञानम् ॥

[1]प्रसारणाकुञ्चनतः सन्धिनष्टं तथास्थिवत् ।

॥ स्नाय्वादिनष्टशल्यविज्ञानम् ॥

नष्टे स्नायुसिरास्रोतोधमनी[2]ष्वसमे पथि ॥ १५

अश्वयुक्तं [3]रथं खण्डचक्रमारोप्य रोगिणम् ।

शीघ्रं नयेत् ततस्तस्य संरम्भाच्छल्यमादिशेत् ॥ १६

॥ मर्मनष्टस्यानुक्तौ युक्तिः ॥

मर्मनष्टं पृथङ् नोक्तं तेषां मांसादिसंश्रयात् ।

॥ नष्टशल्यस्य सामान्यतो विज्ञानम् ॥

सामान्येन सशल्यं तु क्षोभिण्या क्रियया सरुक् ॥ १७

॥ व्रणाकृत्या शल्यलक्षणम् ॥

वृत्तं पृथु चतुष्कोणं त्रिपुटं च समासतः ।

अदृष्टशल्यसंस्थानं [4]व्रणाकृत्या विभावयेत् ॥ १८

॥ शल्याहरणोपायौ ॥

तेषामाहरणोपायौ प्रतिलोमानुलोमकौ ।

अर्वाचीनपराचीने [5]निर्हरेत् तद्विपर्ययात् * ॥ १९

॥ तिर्यग्गतस्य हरणविधिः ॥

सुखाहार्यं यतश्छित्त्वा ततस्तिर्यग्गतं हरेत् ।

॥ अनिर्घात्यानि शल्यानि ॥

शल्यं न § [6]निर्घात्यमुरःकक्षावङ्क्षणपार्श्वगम् ॥ २०

---

1 प्रसादना 2 स्वसन्धे 3 रथं 4 प्रणिपत्य 5 निर्हरे

* प्रतिलोममर्वाचीनं अनुलोमं पराचीनं च निर्हरेदित्यर्थः । 6 नानिर्घा .... यं क्षण

§ निर्घातनं = मुद्गरादिभिर्हत्वा विद्धप्रदेशादन्यमार्गे निर्गमकरणम्

प्रतिलोममनुतुण्डं छेद्यं पृथुमुखं च यत् ।

॥ अनाहार्यशल्यानि ॥

नैवाहरेद् विशल्यघ्नं नष्टं वा निरुपद्रवम् ॥ २१

॥ करप्राप्तस्य हरणविधिः ॥

अथाहरेत् करप्राप्तं करेणैव

॥ दृश्यस्य सिंहास्याद्याहरणविधिः ॥

इतरत् पुनः ।

दृश्यं [1]सिंहाहिमकरवर्मिकर्कटकाननैः ॥ २२

॥ अदृश्यस्य कङ्कमुखादिविधिः ॥

अदृश्यं व्रणसंस्थानाद् ग्रहीतुं शक्यते यतः ।

कङ्कभृङ्गाह्वकुरर[2]शरारीवायसाननैः ॥ २३

॥ संदंशादिभिराहरणविधिः ॥

सदंशाभ्यां त्वगादिस्थं तालाभ्यां सुषिरं हरेत् ।

सुषिरस्थं तु [3]नलकैः शेषं शेषैर्यथायथम् ॥ २४

॥ शस्त्रविधिः ॥

शस्त्रेण वा विशस्यादौ ततो निर्लोहितं व्रणम् ।

कृत्वा घृतेन संस्वेद्य बद्ध्वाचारिकमादिशेत् ॥ २५

॥ सिरास्नायुलग्नाहरणविधिः ॥

सिरास्नायुविलग्नं तु [4]चालयित्वा शलाकया ।

॥ हृदयादिलग्नशल्याहरणविधिः ॥

हृदये संस्थितं शल्यं त्रासितस्य हिमाम्बुना ॥ २६

ततः स्थानान्तरप्राप्तमाहरेत् तद् यथायथम् ।

यथामार्गं दुराकर्षमन्यतोऽप्येवमाहरेत् ॥ २७

---

1 वार्मिकर्कका   2 शाराद्दि   3 नसकैः   4 वाक .... वा

॥ लेपयोगौ ॥

*मेषशृङ्गस्य मूलं वा मूलमुत्तरणीभवम् ।
जलपिष्टं विलिप्तं तु तच्च शल्यं समुद्धरेत् ॥ २८

॥ अस्थिदष्टशल्याहरणविधिः ॥

अस्थिदष्टे नरं पद्भ्यां पीडयित्वा विनिर्हरेत् ।
इत्यशक्ये सुबलिभिः सुगृहीतस्य किङ्करैः ॥ २९
तथाप्यशक्ये [1]वारङ्ग※ चक्रीकृत्य [2]धनुर्ज्यया ।
सुबद्धं वक्त्र[3]कटके बध्नीयात् सुसमाहितः ॥ ३०
सुसंयतस्य ‡पञ्चाङ्ग्या वाजिनः [4]कशया ततः ।
ताडयेदिति मूर्धानं वेगेनोन्नमयन् यथा ॥ ३१
उद्धरेच्छल्य[5]मेवं वा शाखायां कल्पयेत् तरोः ।

॥ दुर्बलवारङ्गादिशस्त्राहरणविधिः ॥

बद्ध्वा दुर्बल[6]वारङ्गं कुशाभिः शस्त्रमाहरेत् ॥ ३२
श्वयथुग्रस्तवारङ्गं शोफमुत्पीड्य युक्तितः ।

॥ उत्तुण्डिताहरणोपायः ॥

मुद्गराहतया नाड्या निर्घात्योत्तुण्डितं हरेत् ॥ ३३
तैरेव चानयेन्मार्गममार्गोत्तुण्डितं तु यत् ।

॥ सकर्णनिष्कर्णाहरणोपायः ॥

मृदित्वा कर्णिनां कर्णौ [7]नाड्यास्येन निगृह्य वा ॥ ३४
अयस्कान्तेन निष्कर्णं विवृतास्यमृजुस्थितम् ।

॥ पक्काशयगशल्याहरणविधिः ॥

पक्काशयगतं शल्यं विरेकेण विनिर्हरेत् ॥ ३५

---

* ष्का .... देन मुखे घातस्य लेपितम् । विरमन्तस्त्यितं सर्वं निस्सरत्येव तन्मुखात् इत्यधिको मातृकास्थः-पाठः ।

※ वारङ्ग=शस्त्रमस्तके खिलाकारोऽवयवः ।

‡ पञ्चाङ्गी=चतुर्षु चरणेषु मुखे च बन्ध विशेषः ।

1 पारङ्ग
2 धनुर्बन्धम् 3 कटके
4 कशया 5 मेवं 6 शाखिभिश्शस्त्र 7 ह्रस्वं स्येन

॥ दुष्टवाताद्याहरणोपायः ॥

दुष्ट[1]वातविषस्तन्यरक्ततोयादि चूषणैः ।

॥ कण्ठगतशल्याहरणविधिः ॥

कण्ठस्रोतोगते शल्ये सूत्रं कण्ठे प्रवेशयेत् ॥ ३६

[2]बिसेनाचे ततः शल्ये बिसं सूत्रं समं हरेत् ।

नाड्याग्नितापितां क्षिप्त्वा शलाकामप्रस्थिरीकृताम् ॥ ३७

आनयेज्जातुषं कण्ठाज्जतुदिग्धमजातुषम् ।

केशोण्डुकेन पीतेन [3]द्रवैः कण्टकमाक्षिपेत् ॥ ३८

सहसा सूत्रबद्धेन वमतस्तेन चेतरत् * ।

॥ अशक्यस्याधःप्रवेशनम् ॥

अशक्यं मुखनासाभ्यामाहर्तुं परतो नुदेत् ॥ ३९

॥ ग्रासशल्याहरणविधिः ॥

अप्पानस्कन्धघाताभ्यां ग्रासशल्यं प्रवेशयेत् ।

॥ सूक्ष्मशल्याहरणविधिः ॥

सूक्ष्माक्षिव्रणशल्यानि क्षौमवालजलैर्हरेत् ॥ ४०

॥ उदकशल्यनिर्हरणविधिः ॥

अपां पूर्णं विधुनुयादवाक्शिरसमायतम् ।

वामयेद्वामुखं भस्मराशौ वा निखनेन्नरम् ॥ ४१

॥ जलमग्नस्यौषधम् ॥

वारिमज्जनमृतस्य विग्रहं
तिन्त्रिणीदळरसेन सेचितम् ।
आतपे मुहुरतीव शोषये-
दाशु जीवितमवाप्नुयाद् ध्रुवम् ॥ ४२

॥ कर्णाम्बुनिर्हरणोपायः ॥

कर्णेऽम्बुपूर्णे हस्तेन मथित्वा तैलवारिणी ।

---

1 चूत  2 बिसीणाके  3 द्रव्ये

* तेन चेतरत्=कण्टकेन च केशोन्डुकमित्यर्थः ।

क्षिपेदधोमुखं कर्णं हन्याद्वा चूषयेत वा ॥ ४३

॥ कर्णस्रोतोगते कीटे प्रतिक्रिया ॥

कीटे स्रोतोगते कर्णं पूरयेल्लवणाम्बुना ।
शुक्तेन वा सुखोष्णेन मृते क्लेदहरो विधिः ॥ ४४

॥ जातुषाणां कालेन विलीनता ॥

[1]जातुषं हेमरूप्यादि धातुजं च चिरं स्थितम् ।
ऊष्मणा प्रायशः शल्यं देहजेन विलीयते ॥ ४५

॥ मृदादीनां अविलीनता ॥

[2]मृद्वेणुदारुशृङ्गास्थिदन्तवालोपलानि च ।
विषाणवेण्वयस्तालदारु शल्यं चिरादपि ॥ ४६
प्रायो निर्भुज्यते ; तद्धि पचत्याशु [3]पलसृजी ।

॥ अविदग्धे विदाहोपायः ॥

शल्ये मांसावगाढे चेत् [4]स देशो न विदह्यते ॥ ४७
ततस्तन्मर्दनस्वेदशुद्धिकर्शनबृंहणैः ।
तीक्ष्णो[5]पनाहपानान्नघनशस्त्रपदाङ्कनैः ॥ ४८
पाचयित्वा हरेच्छल्यं पाटनैषणभेदनैः ।

॥ अनुक्तेषु कर्तव्यम् ॥

शल्यप्रदेशयन्त्राणामवेक्ष्य बहुरूपताम् ।
तैस्तैरुपायैर्मतिमाञ्छल्यं विद्यात् तथाहरेत् ॥ ४९

इति श्रीश्रीनिवासपण्डितविरचिते चिकित्सातिलके
सूत्रस्थाने शल्याहरणविधिर्नाम अष्टात्रिंशोऽध्यायः ॥

---

1 जातुषं हे ... च स्थिरं  2 मृद्वेण  3 फलमे सृजे
4 सदेके  5 पनाह

## ॥ अथैकोनचत्वारिंशोऽध्यायः ॥

### ॥ अथातः शस्त्रविधिमध्यायं व्याख्यास्यामः ॥

॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥

### ॥ शारीरव्रणोपचारवर्गः ॥

#### ॥ व्रणशोथे पाकरक्षणविधिः ॥

व्रणः संजायते प्रायः पाकाच्छ्वयथुपूर्वकात् ।
तमेवोपचरेत् तस्माद् रक्षन् पाकं प्रयत्नतः ॥ १
सुशीतलेपसेकास्रमोक्षसंशोधनादिभिः ।

#### ॥ आमशोफलक्षणम् ॥

शोफोऽल्पोऽल्पोष्णरुक् सामः सवर्णः कठिनः स्थिरः ॥ २

#### ॥ पच्यमानशोफलक्षणम् ॥

[1]पच्यमानो विवर्णस्तु रागी वस्तिरिवाततः ।
स्फुटतीव सनिस्तोदः साङ्गमर्दविजृम्भिकः ॥ ३
संरम्भारुचिदाहोष्मतृड्ज्वरोन्निद्रतान्वितः ।
[2]स्त्यानं विष्यन्दयत्याज्यं व्रणवत् स्पर्शनासहः ॥ ४

#### ॥ पक्वशोफलक्षणम् ॥

पक्वेऽल्पवेगता म्लानिः पाण्डुता वलिसंभवः ।
[3]नामोऽन्तेषून्नतिर्मध्ये कण्डू[4]शोफादिमार्दवम् ॥ ५
स्पृष्टे पूयस्य संचारो भवेद् वस्ताविवाम्भसः ।

#### ॥ पाके दोषाणां कर्म ॥

शूलं नर्तेऽनिलाद् दाहः पित्ताच्छोफः कफात् तथा ॥ ६
रागो रक्ताच्च ; पाकः स्यादतो दोषैः सशोणितैः ।

#### ॥ अतिपक्वशोफलक्षणम् ॥

पाकेऽतिवृत्ते सुषिरस्तनुस्त्वग् दोषभक्षितः ॥ ७
वलीभिराचितः श्यावः शीर्यमाणतनूरुहः ।

---

1 विपच्यमानो  2 स्त्यानुविस्यन्दयत्यसं  3 जीर्णामोऽन्ते पूर्णतिर्मध्ये  4 श्वो थो

॥ अन्तःपाकलक्षणम् ॥

कफजेषु तु शोफेषु गम्भीरं पाकमेत्यसृक् ॥ ८
[1]पक्वलिङ्गं ततोऽस्पष्टं यत्र स्याच्छीतशोफता ।
त्वक्सावर्ण्यं रुजाल्पत्वं घनस्पर्शत्वमश्मवत् ॥ ९
अन्तःपाकमिति ब्रूयात् तत् प्राज्ञो मुक्तसंशयः ।

॥ दारणपाटनविषयौ ॥

अल्पसत्वेऽबले [2]बाले पाकाद् वात्यर्थमुद्धते ॥ १०
दारणं मर्मसन्ध्यादिस्थिते चान्यत्र पाटनम् ।

॥ आमच्छेदे दोषाः ॥

आमच्छेदे सिरास्नाय्वाद्यापादोऽसृगतिस्रुतिः ॥ ११
रुजोऽतिवृद्धिर्दरणं [3]विसर्पो वा क्षतोद्भवः ।

॥ पक्वस्योपेक्षायां दोषाः ॥

तिष्ठन्नन्तः पुनः पूयः सिरास्नाय्वसृगामिषम् ॥ १२
विवृद्धो दहति क्षिप्रं तृणोलुपमिवानलः ।

॥ आमच्छेदपक्वोपेक्षयोर्निन्दा ॥

यश्छिनत्त्याममज्ञानाद् यश्च पाकं[4]मुपेक्षते ॥ १३
श्वपचाविव विज्ञेयौ तावनिश्चितकारिणौ ।

॥ शस्त्रकर्मणः पूर्वकर्म ॥

प्राक् शस्त्र[5]कर्मणश्चेष्टं भोजयेदन्नमातुरम् ॥ १४
पानपं पाययेन्मद्यं तीक्ष्णं यो ऽवेदनासहः ।
न मूर्च्छत्यन्नसंयोगान्मत्तः शस्त्रं न बुध्यते ॥ १५
अन्यत्र मूढगर्भाश्ममुखरोगोदरातुरात् ।

॥ शस्त्रावचारणविधिः ॥

अथाहृतोपकरणं वैद्यः प्राङ्मुखमातुरम् ॥ १६

---

1 तो स्पष्टं यत्र स्याच्छिवरूपता    2 जाते पा .... स्यते
3 धरणं विसर्पोऽपा    4 मपेक्षते    5 कर्मणि श्रेष्ठ

संमुखो यन्त्रयित्वाशु न्यस्येन्मर्मादि वर्जयन् ।
अनुलोमं [1]सुनिशितं शस्त्रमापूयदर्शनात् ॥ १७
सकृदेवाहरेत् तच्च

॥ पाटनप्रमाणम् ॥

पाके तु सुमहत्यपि ।
[2]पाटयेद् द्व्यङ्गुलं सम्यग् द्व्यङ्गुलत्र्यङ्गुलान्तरम् ॥ १८
एषित्वा सम्य[3]गेषण्या परितः सुनिरूपितम् ।
अङ्गुलीवालनालैर्वा यथादोषं यथाश्रयम् ॥ १९

॥ पाटनस्थानानि ॥

यतो यतो गतिं विद्यादुत्सङ्गो यत्र यत्र च ।
तत्र तत्र व्रणं कुर्यात् सुविभक्तं निराशयम् ॥ २०
आयतं च विशालं च यथा दोषो न तिष्ठति ।

॥ शस्त्रकर्मणि शस्तानि ॥

शौर्यमाशुक्रिया[4] शस्त्रतैक्ष्ण्यमस्वेदवेपथू ॥ २१
असंमोहश्च वैद्यस्य शस्त्रकर्मणि शस्यते ।

॥ तिर्यक्छेदनीयस्थानानि ॥

तिर्यक् छिन्द्याल्ललाटभ्रूदन्तवेष्टकजत्रुणि ॥ २२
कुक्षिकक्षाक्षिकूटोष्ठकपालगलवङ्क्षणे ।
अन्यत्रच्छेदनात् तिर्यक् सिरास्नायुविपाटनम् ॥ २३

॥ पश्चात्कर्म ॥

शस्त्रेऽवचारिते वाग्भिः शीताम्भोभिश्च रोगिणम् ।
आश्वास्य परितोऽङ्गुल्या प्रतिपीड्य व्रणं ततः ॥ २४
क्षालयेच्च कषायेण

॥ धूपनविधिः ॥

प्लोतेनाम्भोऽपनीय च ।
गुग्गुल्वगरुसिद्धार्थहिङ्गुसर्जरसान्वितैः ॥ २५

---

1 सुशीतं तु 2 पाटयेद्द्व्यङ्गुलं सम्यग्द्व्यङ्गुलं त्र्यङ्गुलान्तरम्
3 गैषण्या परेतः 4 विक्षा .... वेपथू

[1]धूपयेत् पटुषड्ग्रन्थानिम्बपत्रैर्घृत[2]प्लुतैः ।

॥ वर्तिप्रयोगः ॥

तिलकल्काज्यमधुभिर्यथास्वं भेषजेन च ॥ २६

दिग्धां वर्तिं ततो दद्यात्

॥ बन्धनविधिः ॥

तैरेवाच्छादयेच्च तम् ।

[3]घृताक्तैः सक्तुभिश्चोर्ध्वं घनां कवलिकां ततः ॥ २७

निधाय युक्त्या बध्नीयात् पट्टेन सुसमाहितः ।

पार्श्वे सव्येऽपसव्ये वा नाधस्तान्नैव चोपरि ॥ २८

॥ हितपट्टादिलक्षणम् ॥

शुद्धसूक्ष्मदृढाः पट्टाः [4]कवल्यः सविकेशिकाः ।

धूपिता मृदवः स्निग्धा निर्वलीका व्रणे हिताः ॥ २९

॥ रक्षादिविधिः ॥

कुर्वीतानन्तरं रक्षां तस्य रक्षोनिषिद्धये ।

बलिं चोपहरेत् तेभ्यः

॥ ओषधिधारणविधिः ॥

सदा मूर्ध्नि च धारयेत् ॥ ३०

× लक्ष्मीं गुहामतिगुहां जटिलां ब्रह्मचारिणीम् ।

वचां छत्रामतिच्छत्रां दूर्वां सिद्धार्थकानपि ॥ ३१

॥ स्नेहाचारातिदेशः ॥

ततः स्नेहविधानोक्तं तस्याचारं समादिशेत् ।

॥ दिवास्वप्नदोषः ॥

दिवा स्वप्नो व्रणे कण्डूरागरुक्शोफपूयकृत् ॥ ३२

---

1 भसबे 2 द्रुतैः 3 भं .... घनां — कफ .... 4 कवल्यस्सविशेषिकाः

× लक्ष्मीः=पद्मचारिणी; गुहातिगुहे=शालिपर्णीपृश्निपर्ण्यौ; जटिला=जटामांसी। ब्रह्मचारिणी=ब्राह्मी; छत्रा=शतपुष्पा; अतिच्छत्रा=विषाणिका

॥ स्त्रीपरिहारविधिः ॥

स्त्रीणां तु स्मृतिसंस्पर्शदर्शनैश्चलिते स्रुते ।

शुक्रे व्यवायवान् दोषानसंसर्गेऽप्यवाप्नुयात् ॥ ३३

॥ भोजनविधिः ॥

भोजनं तु यथासात्म्यं यवगोधूमषष्टिकाः ।

मसूरमुद्गतुवरीजीवन्तीसुनिषण्णकाः ॥ ३४

बालमूलकवार्ताकतण्डुलीयकवास्तुकम् ।

कारवेल्लककर्कोटपटोलकटुकाफलम् ॥ ३५

सैन्धवं दाडिमं धात्री घृतं तप्तहिमं जलम् ।

जीर्णशाल्योदनं स्निग्धमल्पमुष्णं द्रवोत्तरम् ॥ ३६

भुञ्जानो जाङ्गलैर्मांसैः शीघ्रं व्रणमपोहति ।

॥ मात्राशनविधिः ॥

अशितं मात्रया काले पथ्यं याति जरां सुखम् ॥ ३७

॥ अजीर्णजा व्यापदः ॥

अजीर्णे त्वनिलादीनां विभ्रमो बलवान् भवेत् ।

ततः शोफरुजापाकदाहमोहानवाप्नुयात् ॥ ३८

॥ नवधान्यादिप्रतिषेधः ॥

नवधान्यं [1]तिलान् माषान् मद्यं मांसमजाङ्गलम् ।

क्षीरेक्षुविकृतीरम्लं लवणं कटुकं त्यजेत् ॥ ३९

यच्चान्यदपि विष्टम्भि विदाहि गुरु शीतलम् ।

वर्गोऽयं नवधान्यादिर्व्रणिनः सर्वदोषकृत् ॥ ४०

॥ विशिष्य मद्यप्रतिषेधः ॥

मद्यं तीक्ष्णोष्णरूक्षाम्लमाशु व्यापादयेद् व्रणम् ।

॥ व्रणोपचारविधिः ॥

वालोशीरैश्च वीजेत न चैनं परिघट्टयेत् ॥ ४१

---

1 मध्यं मांसमजाङ्गलम्

[1]न तुदेन्न च कण्डूयेच्चेष्टमानश्च पालयेत् ।
स्निग्धवृद्धद्विजादीनां कथाः शृण्वन् मनःप्रियाः ॥ ४२
आशावान् व्याधिमोक्षाय क्षिप्रं व्रणमपोहति ।

॥ पुनःप्रक्षालनादिकालः ॥

तृतीयेऽह्नि पुनः कुर्याद् व्रणकर्म च पूर्ववत् ॥ ४३
प्रक्षालनादि

॥ द्वितीयदिनक्षालनादिनिषेधः ॥

दिवसे द्वितीये नाचरेत् तथा ।
तीव्रव्यथो विग्रथितश्चिरात् संरोहति व्रणः ॥ ४४

॥ विकेशिकाकल्कयोर्दोषाः ॥

स्निग्धां रूक्षां श्लथां गाढां दुर्न्यस्तां च विकेशिकाम् ।
व्रणे न दद्यात् कल्कं च

॥ तद्दोषजव्यापदः ॥

स्नेहा[2]त् क्लेदो विवर्धते ॥ ४५
मांसच्छेदोऽतिरुग् रौक्ष्याद् दारणं शोणितागमः ।
श्लथातिगाढदुर्न्यासैर्व्रणवर्त्मावघर्षणम् ॥ ४६

॥ विकेशिकाप्रयोजनम् ॥

सपूतिमांसं सोत्सङ्गं सगतिं पूयगर्भिणम् ।
व्रणं [3]विशोधयेच्छीघ्रं स्थिता ह्यन्तर्विकेशिका ॥ ४७

॥ आमच्छेदे चिकित्सा ॥

[4]व्यम्लं तु पाटितं शोफं पाचनैः समुपाचरेत् ।
भोजनैरुपनाहैश्च नातिव्रणविरोधिभिः ॥ ४८

॥ इति शस्त्रकर्मणि शारीरव्रणोपचारवर्गः ॥

*   *   *

1 स तुदे [ये] च    2 स्नेहो    3 च शोधयेच्छीघ्रं
4 चाप्यम्लं पाकिं

## ॥ अथ सद्योव्रणोपचारवर्गः ॥

### ॥ सीवनार्हाः ॥

सद्यः सद्योव्रणान् सीव्ये[1]द् विवृतानभिघातजान् ।
मेदोजाँल्लिखितान् ग्रन्थीन् ह्रस्वाः [2]पालीश्च कर्णयोः ॥ १
शिरोऽक्षिकूटनासोष्ठगण्डकर्णोरुबाहुषु ।
ग्रीवाललाटमुष्कस्फिङ्मेढ्रपायूदरादिषु ॥ २
गम्भीरेषु प्रदेशेषु मांसलेष्वचलेषु च ।

### ॥ सीवनानर्हाः ॥

न तु वङ्क्षणकक्षादावल्पमांसे चले व्रणान् ॥ ३
वायुनिर्वाहिणः शल्य[3]गर्भान् क्षारविषाग्निजान् ।

### ॥ सीवनविधिः ॥

सीव्येच्चलास्थिशुष्कास्रतृणरोमापनीय तु ॥ ४
प्रलम्बमानं विच्छिन्नं निवेश्य स्वनिवेशने ।
सन्ध्यस्थि च [4]स्थिते रक्ते स्नायुसूत्रेण वल्कलैः ॥ ५
सीव्येन्न दूरे नासन्ने गृह्णन्नाल्पं न वा बहु ।

### ॥ सीवनपश्चात्कर्म ॥

सान्त्वयित्वा ततश्चार्तं व्रणे मधुघृतद्रुतैः ॥ ६
अञ्जनक्षौमजमषीफलिनीसल्लकीफलैः ।
सलोध्रमधुकैर्दिग्धैर्युञ्ज्या[5]द् बन्धादि पूर्ववत् ॥ ७

### ॥ शोणितेनार्द्रीकृत्य सीवनम् ॥

व्रणो निश्शोणितोष्ठो यः किञ्चिदेवावलिख्य तम् ।
संजातरुधिरं सीव्येत् सन्धानं ह्यस्य शोणितम् ॥ ८

### ॥ बन्धनविधिः ॥

[6]बन्धनानि तु दोषादीन् प्रेक्ष्य युञ्जीत तेषु च ।
अविकाजिनकौशेयमुष्णं क्षौमं च शीतलम् ॥ ९

---

1 विवृतानभिजात    2 पाठीश्च    3 गन्धान्
4 स्थिरे    5 दिग्धादि    6 बन्धनादिषु

शीतोष्णं तूलसन्तानकार्पासस्नायुवल्कजम् ।
[1]ताम्रायस्त्रपुसीसानि व्रणे मेदःकफाधिके ॥ १०
भङ्गे च युञ्ज्यात् फलकचर्मवल्ककुशादि च ।

॥ बन्धप्रकाराः ॥

स्वनामानुगताकारा बन्धास्तु दश पञ्च च ॥ ११
कोशस्वस्तिकमुत्तोलिचीनदामानुवेल्लितम् ।
[2]खट्वाविबन्ध[3]स्थगिकावितानोत्सङ्गगोष्फणम् ॥ १२
[4]यमकं मण्डलाख्यं च पञ्चाङ्गीं चेति योजयेत् ।
यो यत्र सुनिविष्टः स्यात् तं तेषां तत्र योजयेत् * ॥ १३

॥ गाढशिथिलादिबन्धविषयाः ॥

[5]बध्नीयाद् गाढमूरुस्फिक्कक्षावङ्क्षणमूर्धसु ।
शाखावदन[6]कर्णोरःपृष्ठपार्श्वगलोदरे ॥ १४
समं मेहनमुष्के च [7]नेत्रे सन्धिषु च श्लथम् ।

॥ वातश्लेष्मजे बन्धगुणभेदाः ॥

बध्नीया[8]च्छिथिलस्थाने वातश्लेष्मोद्भवे समम् ॥ १५
गाढमेव समस्थाने भृशं गाढं तदाशये ।
शीते वसन्तेऽपि च तौ मोक्षणीयौ त्र्यहात् त्र्यहात् ॥ १६

॥ पित्तरक्तजे विशेषाः ॥

पित्तरक्तोत्थयोर्बन्धो गाढस्थाने समो मतः ।
समस्थाने श्लथो नैव शिथिलस्याशये तथा ॥ १७

---

1 यन्त्रपु सानि 2 घट्टी 3 स्थविका 4 यमुकं

*तत्र कोशमङ्गुलिपर्वसु, दाम सम्बाधेऽङ्गे, उत्सङ्गं विलम्बिनि, स्वस्तिकं सन्धिकूर्चभ्रूस्तनान्तरकक्षाक्षिकपोलकर्णेषु, अनुवेल्लितं शाखासु, मुत्तोलीं ग्रीवामेढ्रयोः, मण्डलं वृत्तेऽङ्गे, स्थगिकामङ्गुष्ठाङ्गुलिमेढ्राग्रमूत्रवृद्धिषु, यमकं यमलव्रणयोः, खट्वां हनुशङ्खगण्डेषु, चीनमपाङ्गयोः, विबन्धमुदरोरुपृष्ठेषु वितानं मूर्धादौ पृथुलेऽङ्गे, गोष्फणं नासौष्ठचिबुकसन्धिषु, पञ्चाङ्गीं जत्रूर्ध्वमिति,

5 मूरुस्फीक्ष 6 कण्ठोरः 7 स्तन 8 त्पिच्छिल

सायं प्रातस्तयोर्मोक्षो ग्रीष्मे शरदि चेष्यते ।

॥ अबन्धे दोषाः ॥

अबन्धे दंशमशकशीतवातादिपीडितः ॥ १८
दुष्टो भवेद् व्रणश्चात्र न तिष्ठेत् स्नेहभेषजम् ।
कृच्छ्रेण शुद्धिं रूढिं वा याति रूढो विवर्णताम् ॥ १९

॥ बन्धजा गुणाः ॥

बन्धात् तु चूर्णितो भग्नो विश्लिष्टः [1]पाटितोऽपि वा ।
छिन्नस्नायुसिरोऽप्याशु सुखं संरोहति व्रणः ॥ २०
[2]उत्थानशयनाद्यासु सर्वेहासु न पीड्यते ।
[3]उद्वृत्तौष्ठः समुत्सन्नो विषमः कठिनः सरुक् ॥ २१
समो मृदुररुक् शी॰ व्रणः शुद्ध्यति रोहति ।

॥ पत्राच्छादनविधिः ॥

स्थिराणामल्पमांसानां रौक्ष्यादनुपरोहताम् ॥ २२
प्रच्छाद्यमौषधं पत्रैर्यथादोषं यथर्तु च ।
अजीर्णतरुणाच्छिद्रैः समन्तात् सुनिवेशितैः ॥ २३
धौतैरकर्कशैः क्षीरिभूर्जार्जुनकदम्बजैः ।

॥ अबन्धनीया व्रणाः ॥

कुष्ठिनामग्निदग्धानां [4]पिडका मधुमेहिनाम् ॥ २४
कर्णिकाश्चोन्दुरुविषे क्षारदग्धा विषान्विताः ।
[5]बन्धनीया न मांसपाके गुदपाके च दारुणे ॥ २५
शीर्यमाणाः सरुग्दाहाः [6]शोफावस्थाविसर्पिणः ।

॥ व्रणे क्रिमिपीडा ॥

अरक्षया व्रणे यस्मिन् मक्षिका निक्षिपेत् क्रिमीन् ॥ २६

---

1 पाटकोपि 2 उत्तानशयनाद्यु 3 उद्वात्योष्ठसमुत्पन्नो
4 पीटिका 5 मांस्पाकेन बन्धन धारुणी 6 शोभा तदपि

ते भक्षयन्तः कुर्वन्ति रुजा[1]शोफास्रसंस्रवान् ।

॥ क्रिमिप्रतिक्रिया ॥

सुरसादिं प्रयुञ्जीत तत्र धावनपूरणे ॥ २७

सप्तपर्णकरञ्जार्कनिम्बराजादनत्वचः ।
गोमूत्रकल्कितो लेपः सेकः क्षाराम्बुना हितः ॥ २८

प्रच्छाद्य [2]मांसपेश्या वा व्रणांस्तानाशु निर्हरेत् ।

॥ सदोषस्य रोपणप्रतिषेधः ॥

न चैनं त्वरमाणोऽन्तः[3]सदोषमुपरोहयेत् ॥ २९

सोऽल्पेनाप्यपचारेण भूयो विकुरुते यतः ।

॥ रूढेऽपि परिहारकालः ॥

रूढेप्यऽजीर्णव्यायामव्यवायादीन् विवर्जयेत् ॥ ३०

[4]आदरेणानुवर्तव्यो मासान् षट् सप्त वा विधिः । ३१

॥ अनुक्तेषु कर्तव्यम् ॥

उत्पद्यमानासु च तासु तासु
वार्तासु दोषादिबलानुसारी ।
तैस्तैरुपायैः प्रयतश्चिकित्से-
दालोचयन् विस्तरमुत्तरोक्तम् ॥ ३२

॥ इति सद्योव्रणवर्गः ॥

॥ इति श्रीश्रीनिवासपण्डितविरचितचिकित्सातिलके सूत्रस्थाने शस्त्रविधिर्नाम एकोनचत्वारिंशोऽध्यायः ॥

---

1 शोथा 6 मांसपेश्या 8 सदोषमुपरे हयेत् 4 आदरेणानुवर्तव्यो

## ॥ अथ चत्वारिंशोऽध्यायः ॥

॥ अथातः क्षाराग्निकर्मविधिमध्यायं व्याख्यास्यामः ॥

॥ इति ह स्माहुरात्रेयादयो महर्षयः ॥

### ॥ क्षारवर्गः ॥

#### ॥ क्षारप्रशंसा ॥

सर्वशस्त्रानुशस्त्राणां क्षारः श्रेष्ठो बहूनि यत्।
छेद्यभेद्यादिकर्माणि कुरुते विषमेष्वपि ॥ १
[1]दुःखावचार्यशस्त्रेषु तेन सिद्धिं न यात्सु च
अतिकृच्छ्रेषु रोगेषु यच्च पानेऽपि युज्यते ॥ २

#### ॥ पानीयक्षारविषयाः ॥

सपेयोऽर्शोऽग्निसादाश्मगुल्मोदरगरादिषु ।

#### ॥ प्रतिसारणीयक्षारविषयाः ॥

योज्यः [2]साक्षान्मषश्वित्रबाह्यार्शःकुष्ठसुप्तिषु ॥ ३
भगन्दरापचिग्रन्थिदुष्टनाडीव्रणादिषु ।

#### ॥ क्षारानर्हाः ॥

न तूभयः प्रयोक्तव्यः [3]पित्ते रक्ते चलेऽबले ॥ ४
ज्वरेऽतिसारे हृन्मूर्धरोगे पाण्ड्वामयेऽरुचौ ।
तिमिरे कृतसंशुद्धौ श्वयथौ सर्वगात्रगे ॥ ५
भीरुगर्भिण्यृतुमतीप्रोद्वृत्तफलयोनिषु ।
[4]अजीर्णेऽन्ने शिशौ वृद्धे धमनीसन्धिमर्मसु ॥ ६
तरुणास्थिसिरास्नायु[5]सेवनीगलनाभिषु ।
देशेऽल्पमांसे वृषणे मेढ्रस्रोतोनखान्तरे ॥ ७

---

1 दुःखोपचार्यशस्त्रेषु 2 क्षारोमषश्वित्र 3 पित्तरक्तबले अले
4 नैष्ठिके वृद्धे 5 सीवनी

वर्त्मरोगाहतेऽक्ष्णोश्च [1]शीतवर्षाम्बुदुर्दिने ।

॥ मध्यमक्षारार्थं दाहविधिः ॥

[2]कालमुष्ककशम्याककदळीपारिभद्रकान् ॥ ८
अश्वकर्णमहावृक्षपलाशास्फोतवृक्षकान् ।
इन्द्रवृक्षार्कपूतीकनक्तमालाश्वमारकान् ॥ ९
काकजङ्घामपामार्गमग्निमन्थाग्नितिल्वकान् ।
आर्द्रान् समूलशाखादीन् खण्डशः परि[3]कल्पितान् ॥ १०
कोशातकीश्चतस्रश्च शूकं नालं यवस्य च ।
निवाते निचयीकृत्य पृथक् तानि शिलातले ॥ ११
प्रक्षिप्य [4]मुष्ककचये सुधाश्मानि च दीपयेत् ।
ततस्तिलानां कुतलैः

॥ गालनविधिः ॥

दग्ध्वाग्नौ विगते पृथक् ॥ १२
कृत्वा सुधाश्मनां भस्म द्रोणं त्वितरभस्मनः ।
मुष्ककोत्तरमादाय प्रत्येकं जलमूत्रयोः ॥ १३
गालयेदर्धभारेण महता वाससा ततः ।
यावत् पिच्छिलरक्ताच्छस्तीक्ष्णो जातः

॥ पाकविधिः ॥

तथा च तम् ॥ १४
गृहीत्वा क्षारनिष्यन्दं पचेल्लौह्यां विघट्टयन् ।
पच्यमाने ततस्तस्मिंस्ताः सुधाभस्मशर्कराः ॥ १५
शुक्तिक्षीरवकं * शङ्खनाभींश्चायसभाजने ।
कृत्वाग्निवर्णान् बहुशः [5]क्षाराच्छे कुडवोन्मिते ॥ १६

---

1 शिते वर्षो 2 कमूकक 3 कल्पनात् 4 मुष्ककचय
* क्षीरवकः = शङ्खविशेषः ॥ 5 क्षाराद्बुद्बुदोन्मुखे

निर्वाप्य पिष्ट्वा तेनैव प्रतीवापं विनिक्षिपेत् ।
श्लक्ष्णं शकृद् दक्षशिखिगृध्रकाक[1]कपोतजम् ॥ १७
चतुष्पात्पक्षिपित्ताल्मनोह्वालवणानि च ।
परितः सुतरां चातो दर्व्या तमवघट्टयेत् ॥ १८
सबाष्पैश्च यथोत्तिष्ठेद् बुद्बुदै[2]र्लेहवद् घनः ।
अवतार्य यदा शीतो यवराशावयोमये ॥ १९
स्थाप्योऽयं मध्यमक्षारः

॥ मृदुतीक्ष्णक्षारयोः कल्पना ॥

न तु पिष्ट्वा क्षिपेन्मृदौ ।
निर्वाप्यापनयेत् तीक्ष्णे पूर्ववत् प्रतिवापनम् ॥ २०
तथा लाङ्गलिकादन्तीचित्रकातिविषावचाः ।
स्वर्जिकाकनकक्षीरीहिङ्गुपूतीकपल्लवान् ॥ २१
तालपत्रिं बिडं चेति ; सप्तरात्रात् परं तु सः ।
योज्यः

॥ क्षारभेदानां प्रत्येकं विषयाः ॥

तीक्ष्णोऽनिलश्लेष्ममेदोजेष्वर्बुदादिषु ॥ २२
मध्येष्वेष्वेव मध्योऽन्यः पित्तास्रगुदजन्मसु ।

॥ क्षीणपानीये बलाधानम् ॥

बलार्थं क्षीणपानीये क्षाराम्बु पुनरावपेत् ॥ २३

॥ क्षारगुणाः ॥

नातितीक्ष्णमृदुः श्लक्ष्णः पिच्छिलः शीघ्रगः सितः ।
शिखरी सुखनिर्वाप्यो न विष्यन्दी न चातिरुक् ॥ २४
क्षारो दशगुणः शस्त्रतेजसोरपि कर्मकृत् ।

॥ प्रयुक्तमात्रे क्षारस्य कर्म ॥

[3]आचूषन्निव संरम्भाद् गात्रमापीडयन्निव ॥ २५

---

1 कपोतकाद्. 2 लेहवत्पुन 3 मात्रमवेक्षतां नेत्रमापीडयन्निव

सर्वतोऽनुसरन् दोषानुन्मूलयति मूलतः ।
कर्म कृत्वा गतरुजः स्वयमेवोपशाम्यति ॥ २६

॥ क्षारपातनविधिः ॥

क्षारसाध्ये [1]गदे च्छिन्ने लिखिते स्राविते तथा ।
क्षारं शलाकया दत्वा प्लोतप्रावृतदेहया ॥ २७
मात्राशतमुपेक्षेत

॥ अर्शसि क्षारपातने विशेषः ॥

तत्रार्शःस्वावृताननम् ।
हस्तेन यन्त्रं कुर्वीत

॥ वर्त्मरोगे क्षारपातने विशेषः ॥

वर्त्मरोगेषु वर्त्मनी । २८
निर्भुज्य पिचुनाच्छाद्य कृष्णभागं विनिक्षिपेत् ।
पद्मपत्रतनुः क्षारलेपः

॥ घ्राणकर्णयोः क्षारपातने विशेषः ॥

घ्राणार्बुदेषु तु ॥ २९
प्रत्यादित्यं निषण्णस्य समुन्नम्याग्रनासिकाम् ।
मात्रा विधार्याः पञ्चाशत् तद्वदर्शसि कर्णजे ॥ ३०

॥ पश्चात्कर्म ॥

क्षारं प्रमार्जनेनाशु परिमृज्यावगम्य च ।
सुदग्धं घृतमभ्यक्तं तत् पयोमस्तुकाञ्जिकैः ॥ ३१
निर्वापयेत् ततः साज्यैः स्वादुशीतैः [2]प्रदेहयेत् ।
अभिष्यन्दीनि योज्यानि भोज्यानि क्लेदनाय च ॥ ३२
यदि तत् स्थिरमूलत्वात् क्षारदग्धं न शीर्यते ।
धान्याम्लयव[3]यष्ट्याह्वतिलैरालेपयेत् ततः ॥ ३३

---

1 घटे    2 प्रलेहयेत्    3 धान्याम्लमिश्रितै

तिलकल्कः समधुको घृताक्तो व्रणरोपणः ।

॥ सम्यग्दग्धलक्षणम् ॥

पक्वजम्बूसितं सन्नं सम्यग्दग्धं

॥ दुर्दग्धलक्षणं तत्र कृत्यं च ॥

विपर्यये ॥ ३४

ताम्रतातोदकण्ड्वाद्यैर्दुर्दग्धं तत् पुनर्दहेत् ।

॥ अतिदग्धजव्यापदः ॥

अतिदग्धे स्रवेद् रक्तं मूर्च्छादाहज्वरादयः ॥ ३५

॥ गुदे अतिदाहजव्यापदः ॥

गुदे विशेषाद् विण्मूत्रसंरोधोऽतिप्रवर्तनम् ।
पुंस्त्वोपघातो मृत्युर्वा गुदस्य शातनाद् ध्रुवम् ॥ ३६

॥ नासादावतिदाहजव्यापदः ॥

नासायां नासिकावंशदरणाकुञ्चनोद्भवः ।
भवेच्च विषयाज्ञानं ; तद्वच्छ्रोत्रादिकेष्वपि ॥ ३७
विशेषादत्र [1]सेकोऽम्लैर्लेपो मधु घृतं तिलाः ।
वातपित्तहरा चेष्टा सर्वैव शिशिरा क्रिया ॥ ३८

॥ क्षारदग्धस्याम्लनिर्वापणेयुक्तिः ॥

आम्लो हि शीतलः स्पर्शे क्षारस्तेनोपसंहितः ।
यात्याशु स्वादुतां तस्मादम्लैर्निर्वापयेत् तदा ॥ ३९

॥ इति क्षारवर्गः ॥

* * *

## ॥ अथाग्निकर्मवर्गः ॥

॥ अग्निप्रशंसा ॥

अग्निः क्षारादपि श्रेष्ठस्तद्दग्धानामसंभवात् ।
भेषजक्षारशस्त्रैश्च न सिद्धानां प्रसाधनात् ॥ १

---

1 आकाथैर्लेपो

॥ अग्निकर्मार्हावयवाः ॥

त्वचि मांससिरास्नायुसन्ध्यस्थिषु स युज्यते ।

॥ त्वग्दाहस्य विषयाः द्रव्याणि च ॥

मषाङ्गग्लानिमूर्धार्तिमन्थकीलतिलादिषु ॥ २

त्वग्दाहो वर्तिगोदन्तसूर्यकान्तशरादिभिः ।

॥ मांसदाहस्य विषयाः द्रव्याणि च ॥

अर्शोभगन्दरग्रन्थिनाडीदुष्टव्रणादिषु ॥ ३

मांसदाहो मधुस्नेहजाम्बवोष्ठ[1]गुडादिभिः ।

॥ सिरादिदाहस्य विषयाः द्रव्याणि च ॥

श्लिष्टवर्त्मन्यसृक्स्रावनील्यसम्यक्व्यधादिषु ॥ ४

सिरादिदाहस्तैरेव

॥ अग्निकर्मानर्हाः ॥

न दहेत् क्षारवारितान् ।

अन्तःशल्यासृजो भिन्नकोष्ठान् भूरिव्रणातुरान् ॥ ५

॥ सुदग्धे कर्तव्यम् ॥

सुदग्धं घृतमध्वक्तं स्निग्धशीतैः प्रदेहयेत् ।

॥ सुदग्धस्य लक्षणम् ॥

तस्य लिङ्गं स्थिते रक्ते [2]शब्दवल्लसिकान्वितम् ॥ ६

[3]पक्वतालकपोताभं सुरोहं नातिवेदनम् ।

॥ दुर्दग्धातिदग्धयोर्लक्षणातिदेशः ॥

प्रमाददग्धवत् सर्वं दुर्दग्धात्यर्थदग्धयोः ॥ ७

॥ प्रमाददग्धस्य भेदाः ॥

चतुर्धा [4]तच्च तुत्थेन सह

॥ तुत्थदग्धलक्षणम् ॥

[5]तुत्थस्य लक्षणम् ।

त्वग् विवर्णोप्यतेऽत्यर्थं न च स्फोटसमुद्भवः ॥ ८

---

1 शरादिभिः 2 शब्दपल्लिकान्वितम् 3 पक्वं तालकपोताभं
4 च चतुर्थेन सह 5 दग्धस्य

॥ दुर्दग्धलक्षणम् ॥

सस्फोटदाहतीव्रोषं दुर्दग्धं

॥ अतिदग्धलक्षणम् ॥

अतिदाहतः ।
मांसलम्बनसंकोचदाहधूपनवेदनाः ॥ ९
शिरादिनाशस्तृण्मूर्च्छाव्रणगाम्भीर्यमृत्यवः ।

॥ तुत्थदग्धे प्रतिक्रिया ॥

[1]तुत्थस्याग्निप्रतपनं कार्यमुष्णं च भेषजम् ॥ १०
स्त्यानेऽस्रे वेदनात्यर्थं विलीने मन्दता रुजः ।

॥ दुर्दग्धे प्रतिक्रिया ॥

दुर्दग्धे शीतमुष्णं च युञ्ज्यादादौ ततो हिमम् ॥ ११

॥ सम्यग्दग्धे कर्तव्यम् ॥

सम्यग्दग्धे तुगाक्षीरीप्लक्षचन्दनगैरिकैः ।
लिम्पेत् साज्यामृतैरूर्ध्वं पित्तविद्रधिवत् क्रिया ॥ १२

॥ अतिदग्धे प्रतिक्रिया ॥

अतिदग्धे द्रुतं कुर्यात् सर्वं पित्तविसर्पवत् ।

॥ स्नेहदग्धस्यौषधम् ॥

स्नेहदग्धे भृशतरं रूक्षं तत्र तु योजयेत् ॥ १३

॥ अग्निव्रणेषु सिद्धौषधानि ॥

तिलसंभेदसुमिश्राः पर्णा यष्टिकुमुदचिञ्चजम्बूनाम् ।
एकैकमग्निजनितं व्रणमप्यचिरेणैव नाशयति ॥ १४

॥ त्रिफलाक्षारप्रयोगः ॥

निष्पेष्य * वराङ्गारमविक्षीरेण तिमिरसंकाशम् ।
व्रणमाशु लिप्तमात्रं विनाशयति दूरतः क्लिन्नम् ॥ १५

1 स्वद (गद) अधेमि

* वराङ्गारः = त्रिफलाङ्गारः ।

* ॥ कार्पासादिघृतम् ॥

कार्पासदूर्वासहदेवकाक-
माचि*व्रणघ्नीसरमञ्जरीभिः ।
क्षीरिद्रुयष्टीमधुचन्दनैश्च
सर्पिर्विपक्वं दहनव्रणघ्नम् ॥ १६

॥ मत्स्याक्षीघृतम् ॥

मत्स्याक्षिसाधितं सर्पिर्दहनव्रणनाशनम् ।

॥ वैद्युतदग्धप्रतीकारः ॥

(ग.) वैद्युतानलदग्धस्य परिषेकालेपनानि
चाम्ललवणप्रायाणि तैलयुक्तानि कुर्वीत । १७

॥ अग्निदग्धस्योपचारः ॥

अग्निना चातिदग्धस्य मधुरशीतं स्निग्धप्रायमाहारं
परिषेकं च कुर्वीत । १८

॥ कफप्रायेषूपचारः ॥

श्लेष्मोत्तरव्रणेषु आग्नेयौषधप्रदेहपरिषेकालेपनानि
सर्पिस्सिद्धानि क्षीरेक्षुरसतण्डुलोदकमिश्राणि । १९

---

* "सस्निग्धं वृक्षदुग्धैः सुपिष्टतिलकसंयुतैः ।
शोफो याति प्रलेपेन भल्लातकविभक्षणात् ॥

असा पुष्पमूतं तैलं घृतं नाक्षीरसंयुतम् ।
दु .... तु सूक्ष्मचूर्णानि कारयेत् ॥

दग्धव्रणोपरि क्षिप्तातैलेकाम्बुअनं हितम् ।
क्षीरिवृक्षे त्वचो धात्री चन्दनं मधुयष्टिका ॥

एषां क्वाथो जपा
क्षीरप्रस्थं भृतातैला प्रस्थं च पिष्टिपाचितम् ॥
तत्तैलं साधयेद्दग्धव्रणान्घोरानपि भण्वन् ।
इति मातृकायां अधिकः पाठः ।

* व्रणघ्नी=कर्णिकारी

॥ अग्नितापेषूपचारः ॥

अग्नितापपरितप्तस्य तैलघृतवसापरिषेकमभीक्ष्णतः कुर्वीत । २०

॥ धान्यगृहोष्मव्यापत्प्रतिक्रिया ॥

धान्यादिनिक्षिप्तभूबिलोष्मार्तस्य धान्याम्लसौवीर-
तण्डुलोदककाञ्जिकतक्र[1]चुक्रादिभिः परिषेकः । २१

॥ धूमोपहतलक्षणम् ॥

(प.) अत ऊर्ध्वं प्रवक्ष्यामि धूमोपहतलक्षणम् ।
श्वसिति क्षौति चात्यर्थं[2]मत्याधमति कासते ॥ २२
चक्षुषोः [3]परिदाहश्च [4]रागश्चैवोपजायते ।
सधूमकं निश्वसिति घ्रेयमन्यन्न वेत्ति च ॥ २३
तथैव च रसान् सर्वान् [5]श्रुतिश्चास्योपहन्यते ।
तृष्णादाहज्वरयुतः सीदत्यपि च मूर्छति ॥ २४
[6]धूमोपहत इत्येष

॥ धूमोपहतचिकित्सा ॥

शृणु तस्य चिकित्सितम् ।
सर्पिरिक्षुरसं द्राक्षां पयो वा शर्करां पिबेत् २५
मधुराम्लौ रसौ वापि वमनाय प्रयोजयेत् ।
वमनात् कोष्ठशुद्धिः स्याद् [7]धूमगन्धश्च नश्यति ॥ २६
विधिनानेन शाम्यन्ति [8]सदनक्षवथुज्वराः ।
कवलग्रहयोगेन मनश्चास्य प्रसीदति ॥ २७
[9]शिरोविरेचनं चास्मै दद्याद् योगेन शास्त्रवित् ।
दृष्टिर्विशुद्ध्यते चास्य शिरोग्रीवं च देहिनः ॥ २८
अविदाहि लघु स्निग्धमाहारं च प्रयोजयेत् ।

॥ उष्णवातातपदग्धे प्रतिक्रिया ॥

उष्णवातातपैर्दग्धे शीतः कार्यो विधिर्व्रणे ॥ २९

---

1 शुक्तादिभिः 2 मत्याधमपि 3 परिदाहश्च 4 रागच्छेदो
5 श्रुतिश्चाम्यते 6 धूमोपहय 7 धूमगन्धं निबर्हति 8 सीदनक्षवथुर्ज्वराः
9 ये सिराविरेचनं क्रमात् । शिरोविरेचनं च

॥ शीतादिहते ॥

शीतवर्षानिलहते स्निग्धमुष्णं च शस्यते ।

॥ इन्द्रवज्राग्निदग्धे प्रतिक्रिया ॥

[1]अथातितेजसा दग्धे सिद्धिर्नास्ति कथंचन ।
इन्द्रवज्राग्निदग्धेऽपि जीवति प्रतिकारयेत् ॥ ३०
स्नेहाभ्यङ्गपरीषेकप्रदेहैश्च तथा भिषक् ।

॥ मञ्जिष्ठादिघृतम् ॥

मञ्जिष्ठां चन्दनं दूर्वां पिष्ट्वा सर्पिर्विपाचयेत् ॥ ३१
सर्वेषामग्निदग्धानामेतद् रोपणमिष्यते ।

॥ चन्दनादियमकस्नेहः ॥

चन्दनं वटशृङ्गं च मञ्जिष्ठा मधुकं तथा ॥ ३२
एभिस्तैलं विपक्तव्यं सर्पिःक्षीरसमायुतम् ।
अग्निदग्धव्रणे श्रेष्ठं तत्क्षणाद् रोपणं परम् ॥ ३३

॥ सूत्रस्थानोपसंहारः ॥

[2]शैलश्रीश्रीनिवासीये चिकित्सातिलकाह्वये ।

---

1 अतितेजसा=वज्राग्निना

"शोषक्षीरेक्षुतैलानां वर्गैर्मेदस्य च क्रमात् ।
इति द्रवैकदेशोक्तं यथास्थूलमुदाहृतः ॥
अन्नस्थाने शूकधान्यशिम्बिधान्यकृताक्रमः ।
मांसोद्याने शाकफलविधिवीयवर्गसंज्ञिकाः ॥
मा .... यावत् सन्दर्भाहिक्रमात्मकाः ।
रेखाव्यावेमवरेखीयगौ द्वौ समुदीरितौ ॥
गण्डूषाख्ये तु गण्डूषमुखालेपौ पुनस्तृतौ ।
आश्चोतनाञ्जनाख्यौ च"
पाकश्च वर्गे तु व्रणचारक्षतव्रणान् ।
क्षारक्षाराग्निदाराख्यौ" इति मातृकायामधिकपाठः ॥

2 अत्र पाठभेदो "ग्रन्थेऽस्मिञ्छ्रीनिवासीये, श्रीनिवासेन रचिते" इति

कुरुध्वमस्मिन् विश्वासं, विवादं न कदाचन ।
पुनरुक्तिविचारं च मा कुरुध्वं विशेषतः ॥ ३४
नानाशास्त्रानुसारेण नानामतविभेदतः ।
सुखबोधाय च प्रोक्ते तस्मात् सर्वं प्रशस्यते ॥ ३५
दत्तात्रेयप्रसादात् तु सर्वाभीष्टफलप्रदात् ।
श्रीमद्दैवज्ञश्रीनिवासपण्डितीयेऽतिकौतुके ॥ ३६
चिकित्सातिलके सूत्रस्थानमद्य समाप्यते ।
अत्रार्थाः सूचिताः सूक्ष्माः प्रतन्यन्ते हि सर्वतः ॥ ३७

॥ इति श्रीमदार्वेलमण्डनपण्डितश्रीनिवासीये
चिकित्सातिलके सूत्रस्थानं संपूर्णम् ॥

॥ श्रीकृष्णार्पणमस्तु ॥

---

## ॥ भेषजपरिशिष्टम्[1] ॥

### ॥ राजमृगाङ्करसः ॥

रसभस्म त्रयो भागाः षड्भागं हेमभस्मकम् ।
मृतताम्राच्च भागैकं वज्रभस्म चतुर्गुणम् ॥ १
गोमेदकं च त्रिगुणं राजावर्तं तथैव च ।
गरुडोद्गारवैक्रान्तं प्रवाळं हेममाक्षिकम् ॥ २
तीक्ष्णं कान्तं तथा गन्धं रसो राजमृगाङ्कक: ।
लोकनाथसमं पाच्यं सर्वरोगेषु शस्यते ॥ ३

### ॥ महाराजमृगाङ्करसः ॥

रसभस्म स्वर्णभस्म पञ्चनिष्कं पृथक् पृथक् ।
ताम्रभस्म तारभस्म प्रत्येकं चाष्टनिष्ककम् ॥ ४
अभ्रकं कान्तकं चैव निष्काणां दशकं पृथक् ।
षण्निष्कं नागसिन्दूरं मुक्ताभस्म च तत्समम् ॥ ५
वज्रभस्म चतुर्निष्कं द्विगुणं तु प्रवाळकम् ।
रक्तं मरकतं नीलं गोमेदं पुष्परागकम् ॥ ६
वैडूर्यरक्तभस्मानि समभागानि कारयेत् ।
कण्टकारिकषायेण भानुदुग्धे दिनत्रयम् ॥ ७
तत्कल्कं गोळकं कृत्वा छायाशुष्कं तु कारयेत् ।
निक्षिप्य चान्धमूषायां त्रिदिनं मन्दवह्निना ॥ ८
पक्त्वा सुशीतळं ग्राह्यं खल्वमध्ये विनिक्षिपेत् ।
सूक्ष्मं चूर्णं ततः कृत्वा षड्भागं वत्सनाभकम् ॥ ९
दशनिष्कं शुद्धगन्धं कस्तुरीकुङ्कुमं तथा ।
कर्पूरोऽगरुकाष्ठं च जातीफलतुगास्तथा ॥ १०
सर्वमेकीकृतं चूर्णं स्थापयेद्धेमसंपुटे ।
अभीष्टेऽहनि संपूज्य ब्रह्मविष्णुमहेश्वरान् ॥ ११

---

1 उपलब्धमातृकायामवसाने राजमृगाङ्करस, महाराजमृगाङ्करस, वसन्तकुसुमाकरयोगा उपलभ्यन्ते । मूलस्थानानुप्रवेशे विशेषोपपत्त्यभावेऽपि मातृकायामुपलभ्यमानत्वाद् भेषजपरिशिष्टशीर्षकेणात्र प्रकाश्यन्ते । प्रयोगाणाममीषां प्रक्षिप्तत्वं स्यादिति तु सम्यगभ्यूहितम् ।

धेनुं विप्रादिमीशानं वह्निदुर्गाविनायकान् ।
भैरवं योगिनं शक्रं पूजयित्वा विधानवत् ॥ १२
वैद्यं च रससिद्धं च पूजयेच्छक्तिपूर्वकम् ।
एलादिचूर्णसंयुक्तं वल्लद्वयमितं प्रगे ॥ १३
मधुना भक्षयेन्नित्यं राजरोगनिकृन्तकम् ।
वातजान् पित्तजान् वापि श्लेष्मजान् सन्निपातजान् ॥ १४
[1]वाताद्यष्टमहारोगान् नाशयेन्नात्र संशयः ।
महाराजमृगाङ्कोऽयं रोगराजकुलान्तकः ॥ १५

॥ वसन्तकुसुमाकररसः ॥

पृथग् द्वौ हाटकं चन्द्रस्त्रयो वङ्गाहिकान्तकम् ।
चत्वारः सूतमभ्रं च प्रवाळं मौक्तिकं पविः ॥ १६
भावनं गव्यदुग्धेन[2] वासवेक्षुगणेन च ।
मोच [3]कन्दरसेनैव [4]तथा श्रीद्विनिशाजलैः ॥ १७
शतपत्ररसेनापि माल्त्याः कुसुमोदकैः ।
पश्चान्मृगमदैर्भाव्यं सुसिद्धो रसराड् भवेत् ॥ १८
कुसुमाकरविख्यातो वसन्तपदपूर्वकः ।
वल्लद्वयमितं सेव्यं सिताज्यमधुसंयुतम् ॥ १९
वली[5]पलितविध्वंसि कामदं सुखदं भवेत् ।
मेहघ्नं पुष्टिदं श्रेष्ठं परं गुह्यं रसायनम् ॥ २०

॥ वासवेक्षुगणः ॥

इक्षुखण्डं शतावर्या मूलं गोक्षुरशाल्मली ।
द्राक्षामधूकमधुकखर्जूरं च परूषकम् ॥ २१
बिदारिमु गेकन्दं पयस्या शारिवाद्वयम् ।
जले पर्युषितं शीतं वासवेक्षुरिति स्मृतः ॥ २२

(हिमपात्रे सर्वरसैर्भावना कर्तव्या ॥)

---

1 वातव्याध्यश्मरीकुष्ठमेहोदरभगन्दराः। अर्शांसि ग्रहणीत्यष्टौ महारोगाः सुदुस्तराः इत्युक्तानष्ट महारोगानित्यर्थः ॥

2 वासवादिगणेन च　3 मन्द　4 वांसा　5 पलित